इति। किमत्रानुशयिशब्दे ताच्छील्यार्थे णिनिरिनिर्वा मत्वर्थीयोऽभिमतः। नाद्यः सुप्यजातौ णिनिस्ताच्छील्ये इत्यत्र सुपीति वर्त्तमाने पुनःसुब्ग्रहणस्य उपसर्गनिवृत्त्यर्थत्वेन सोपसर्गाद्धातोर्णिनेरनुत्पत्तेः यथाकथञ्चिदङ्गीकारेऽपि अचोऽञ्णितीति वृद्धिप्रसक्त्यावर्तिशय्यादिपदवदनुशायिपदस्य प्रयोगप्रसङ्गात्। न द्वितीयः

एकाक्षरात् कृतो जातेः सप्तम्याञ्च न तौ स्मृताविति।

तत्प्रतिषेधादेव चानुशयशब्दस्याजन्तत्वेन कृदन्तत्वात्। तस्मादनुशयिशब्दो दुरुपपाद इति चेत् नैतद्भद्रं भावानवबोधात् प्रायिकाभिप्रायमिदं वचनम्। अतएवोक्तं वृत्तिकारेण।

इतिकरणो विवक्षार्थः सर्वत्राभिसम्बध्यत इति।

तेन क्वचिद्भवति कार्य्यं कार्य्यिकास्तण्डुली तण्डुलिक इति। तथाच कृदन्तात् जातेश्च प्रतिषेधस्य प्रायिकत्वम् अनुशयशब्दस्य कृदन्ततया इनेरुपपत्तिरिति सिद्धं पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात् सर्वस्य प्राणभृन्मात्रस्या कृमेश्च विदुषः सञ्जायमानः शरीरविषयादेर्मम वियोगो मा भूदिति प्रत्यहं निमित्तं विना प्रवर्त्तमानो भयरूपोऽभिनिवेशः पञ्चमः क्लेशः। मा च भूवं हि भूयासमिति प्रार्थनायाः प्रत्यात्ममनुभवसिद्धत्वात्। तदाह स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेश इति। ते चाविद्यादयः पञ्च सांसारिकविविधदुःखोपहारहेतुत्वेन पुरुषं क्लिश्नन्तीति क्लेशाः प्रसिद्धाः।

कर्माणि विहितप्रतिषिद्धरूपाणि ज्योतिष्टोमब्रह्मह-

त्यादीनि विपाकाः कर्मफलानि जात्यायुर्भोगाः आफलवि पाकाच्चित्तभूमौ शेरत इत्याशयाः धर्माधर्मसंस्काराः तत्प्रतिपन्थिचित्तवृत्तिनिरोधो योगः निरोधो नाभावमात्रमभिमतं तस्य तुच्छत्वेन भावरूपसंस्कारजननक्षमत्वासम्भवात्, किन्तु तदाश्रयो मधुमतीमधुप्रतीकाविशोकासंस्कारशेषताव्यपदेश्यः चित्तस्यावस्थाविशेषः निरुध्यन्तेऽस्मिन् प्रमाणादिवृत्तय इति व्युत्पत्तेरुपपत्तेः। अभ्यासवैराग्याभ्यां वृत्तिनिरोधः तत्र स्थितौ यत्नोऽभ्यासः। एकाग्रप्रवृत्तिरूपवृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामविशेषः स्थितिः। तन्निमित्तीकृत्य यत्नः पुनः पुनस्तथात्वेन चेतसि निवेशनमभ्यासः। चर्मणि द्वीपिनं हन्तीतिवन्निमित्तार्थेयं सप्तमीत्युक्तं भवति। दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। ऐहिकपारत्रिकविषयादौ दोषदर्शनाद्विरभिलाषस्य ममैते विषया वश्याः नाहमेतेषां वश्य इति विमर्शो वैराग्यमित्युक्तं भवति। समाधिपरिपन्थिक्लेशतनूकरणार्थं समाधिलाभार्थञ्च प्रथमं क्रियायोगविधानपरेण योगिना भवितव्यं क्रियायोगसम्पादने अभ्यासवैराग्ययोः सम्भवात्। तदुक्तं भगवता।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते इति॥

क्रियायोगश्चोपदिष्टः पतञ्जलिना। तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग इति। तपःस्वरूपं निरूपितं याज्ञवल्क्येन।

विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः।

शरीरशोषणं प्राहुस्तपसां तप उत्तममिति ॥

प्रणवगायत्रीप्रभृतीनामध्ययनं स्वाध्याय इति। ते च मन्त्रा द्विविधाः वैदिकास्तान्त्रिकाश्च। वैदिकाश्च द्विविधाः प्रगीता अप्रगीताश्च। तत्र प्रगीताः सामानि, अप्रगीताश्च द्विविधाः छन्दोबद्धास्तद्विलक्षणाश्च। तत्र प्रथमा ऋचः द्वितीया यजूंषि। तदुक्तं जैमिनिना। तेषामृग् यत्रार्थवशेन पादव्यवस्था गीतिषु सामाख्या शेषे यजुःशब्द इति। तन्त्रेषु कामिककारणप्रपञ्चाद्यागमेषु ये ये वर्णितास्ते तान्त्रिकाः। ते पुनर्मन्त्रास्त्रिविधाः स्त्रीपुंनपुंसकभेदात्तताश्च,

स्त्रीपुंनपुंसकत्वेन त्रिविधा मन्त्रजातयः।
स्त्रीमन्त्रा वह्निजायान्ताः नमोऽन्ताः स्युर्नपुंसकाः ॥
शेषाः पुमांसस्ते शस्ताः सिद्धा वश्यादिकर्मणीति ॥

स्नापनादिसंस्काराभावेऽपि निरस्तसमस्तदोषत्वेन सिद्धिहेतुत्वात् सिद्धत्वम्। स च संस्कारो दशविधः कथितः शारदातिलके।

मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः।
निर्दोषतां प्रयान्त्याशु ते मन्त्राः साधु संस्कृताः ॥
जननं जीवनं चैव ताडनं बोधनं तथा।
अभिषेकोऽथ विमलीकरणाप्यायने पुनः।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥
मन्त्राणां मातृकावर्णादुद्धारो जननं स्मृतम्।
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ॥
मन्त्रार्णसंख्यया तद्धि जीवनं संप्रचक्षते।
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ॥

प्रत्येकं वायुबीजेन ताडनं तदुदाहृतम् ॥
विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः ।
मन्त्राक्षरेण सङ्ख्यातैर्हन्यात्तद्बोधनं मतम् ॥
स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये ॥
सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री विमलीकरणं हि तत् ॥
तारव्योमाग्निमनुयुक् ज्योतिर्मन्त्र उदाहृतः ॥
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ।
वारिबीजेन विधिवदेतदाप्यायनं मतम् ॥
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं स्मृतम् ॥
तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥
संस्कारा दश मन्त्राणां सर्वतन्त्रेषु गोपिताः ।
यत् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते ॥
रुद्धकीलितविच्छिन्नसुप्तशप्तादयोऽपि च ।
मन्त्रदोषाः प्रणश्यन्ति संस्कारैरेभिरुत्तमैरिति ॥

तदलमकाण्डताण्डवकल्पेन मन्त्रशास्त्ररहस्योद्घोषणेन ।

ईश्वरप्रणिधानं नामाभिहितानामनभिहितानाञ्च सर्वासां क्रियाणां परमेश्वरे परमगुरौ फलानपेक्षया समर्पणम् । अत्रेदमुक्तम् ।

कामतोऽकामतो वापि यत्करोति शुभाशुभम् ।
तत्सर्वं त्वयि विन्यस्तं त्वत्प्रयुक्तः करोम्यहमिति ॥

क्रियाफलसन्न्यासोऽपि भक्तिविशेषापरपर्य्यायं प्रणि-

त्यानमेव फलाभिसन्धानेन कर्मकरणात्। तथाच गीयते गीतासु भगवता।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।

मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणीति॥

फलाभिसन्धेरुपघातकत्वमभिहितं भगवद्भिर्नीलकण्ठभारतीश्रीचरणैः।

अपि प्रयत्नसम्पन्नं कामेनोपहतं तपः।

न तुष्टये महेशस्य श्वलीढमिव पायसमिति॥

सा च तपःस्वाध्यायेश्वरप्रणिधानात्मिका क्रिया योगसाधनत्वाद्योग इति शुद्धसारोपलक्षणावृत्त्याश्रयणेन निरूप्यते यथायुर्घृतमिति। शुद्धसारोपलक्षणा नाम लक्षणाप्रभेदः। मुख्यार्थबाधतद्योगाभ्यामर्थान्तरप्रतिपादनं लक्षणा। सा द्विविधा रूढिमूला प्रयोजनमूला च। तदुक्तं काव्यप्रकाशे।

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।

अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रियेति॥

तच्छब्देन लक्ष्यत इत्याख्याते गुणीभूतं प्रतिपादनमात्रं परामृश्यते। सा लक्षणेति प्रतिनिर्दिश्यमानापेक्षया तच्छब्दस्य स्त्रीलिङ्गत्वोपपत्तिः। तदुक्तं कैयटैः। निर्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्य्यायेण तत्तल्लिङ्गमुपाददत इति। तत्र कर्मणि कुशल इत्यादिरूढिलक्षणाया उदाहरणं कुशान् लातीति व्युत्पत्त्या दर्भादानकर्त्तरि यौगिकं कुशलपदं विवेचकत्वसारूप्यात् प्रवीणे प्रवर्त्तमानम् अनादिवृद्धव्यवहारपरम्परानुपा-

तित्वेनाभिधानवत् प्रयोजनमनपेक्ष्य प्रवर्त्तते। तदाह,

निरूढालक्षणाः काश्चित् सामर्थ्यादभिधानवदिति ॥

तस्मात् रूढिलक्षणायाः प्रयोजनापेक्षा नास्ति। यद्यपि प्रयुक्तः शब्दः प्रथमे मुख्यार्थं प्रतिपादयति तेनार्थेनार्थान्तरं लक्ष्यत इति अर्थधर्मोऽयं लक्षणा तथापि तत्प्रतिपादके शब्दे समारोपितः सन् शब्दव्यापार इति व्यपदिश्यते। एतदेवाभिप्रेत्योक्तं लक्षणारोपिता क्रियेति। प्रयोजनलक्षणा तु षड्विधा उपादानलक्षणा लक्षणलक्षणा गौणसारोपा गौणसाध्यवसाना शुद्धसारोपा शुद्धसाध्यवसाना चेति। कुन्ताः प्रविशन्ति मञ्चाः क्रोशन्ति गौर्वाहीकः गौरयं आयुर्घृतं आयुरेवेदमिति यथाक्रममुदाहरणानि द्रष्टव्यानि। तदुक्तम्,

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥
सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।
विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥
भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधेति ॥

तदुक्तं काव्यमीमांसामर्मनिर्मन्थनेन।

स च योगो यमादिभेदवशादष्टाङ्ग इति निर्दिष्टः। तत्र यमा अहिंसादयः। तदाह पतञ्जलिः, अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा इति। नियमाः शौचादयः। तदप्याह, शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति। एते च यमनियमा विष्णुपु[illegible] दर्शिताः।

ब्रह्मचर्य्यमहिंसां च सत्यास्तेयापरिग्रहान्।
सेवेत योगी निष्कामो योग्यतां स्वं मनो नयन्॥
स्वाध्यायशौचसन्तोषतपांसि नियमात्मवान्।
कुर्वीत ब्रह्मणि परं परस्मिन् प्रवणं मनः॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः।
विशिष्टफलदाः कामे निष्कामानां विमुक्तिदा इति॥

स्थिरसुखमासनं पद्मासनभद्रासनवीरासनस्वस्तिकासनदण्डकासनसोपाश्रयपर्य्यङ्कक्रौञ्चनिषदनोष्ट्रनिषदनसमसंस्थानभेदाद्दशविधम्।

पादाङ्गुष्ठौ निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु।
ऊर्वोरुपरि विप्रेन्द्र! कृत्वा पादतले उभे।
पद्मासनं भवेदेतत् सर्वेषामभिपूजितम्॥

इत्यादिना याज्ञवल्क्यः पद्मासनादिस्वरूपं निरूपितवान् सत्वं तत एवावगन्तव्यम्। तस्मिन्नासनस्थैर्य्ये सति प्राणायामः प्रतिष्ठितो भवति। स च श्वासप्रश्वासयोर्गतिविच्छेदस्वरूपः। तत्र श्वासो नाम वाह्यस्य वायोरन्तरानयनम्। प्रश्वासः पुनः कौष्ठस्य वहिर्निःसारणम्। तयोरुभयोरपि सञ्चरणाभावः प्राणायामः। ननु नेदं प्राणायामसामान्यलक्षणं तद्विशेषेषु रेचकपूरककुम्भकप्रकारेषु तदनुगतेरयोगादिति चेन्नैष दोषः सर्वत्रापि श्वासप्रश्वासगतिविच्छेदसम्भवात्। तथाहि कौष्ठस्य वायोर्वहिर्निःसरणं रेचकः प्राणायामः प्रश्वासत्वेन प्रागुक्तः। वाह्यवायोरन्तर्धारणं पूरकः यः श्वासरूपः। अन्तःस्तम्भवृत्तिः कुम्भकः। यस्मिन् जलमिव कुम्भे निश्चलतया प्राणाख्यो वायुरवस्थाप्यते

तत्र सर्वत्र श्वासप्रश्वासद्वयगतिविच्छेदोऽस्त्येवेति नास्ति शङ्कावकाशः। तदुक्तं, तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायाम इति। स च वायुः सूर्य्योदयमारभ्य सार्द्धघटिकाद्वयं घटीयन्त्रस्थितघटभ्रमणन्यायेन एकैकस्यां नाड्यां भवति। एवं सत्यहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते। अतएवोक्तं मन्त्रसमर्पणरहस्यवेदिभिरजपामन्त्रसमर्पणे।

षट्शतानि गणेशाय षट्सहस्रं स्वयम्भुवे।
विष्णवे षट्सहस्रञ्च षट्सहस्रं पिनाकिने॥
सहस्रमेकं गुरवे सहस्रं परमात्मने।
सहस्रमात्मने चैवमर्पयामि कृतं जपमिति॥

तथा नाडीसञ्चरणदशायां वायोः सञ्चरणे पृथिव्यादीनि तत्त्वानि वर्णविशेषवशात् पुरुषार्थाभिलाषुकैः पुरुषैरवगन्तव्यानि। तदुक्तमभियुक्तैः।

सार्द्धं घटीद्वयं नाडीरेकैकार्कोदयात् वहेत्।
अरघट्टघटीभ्रान्तिन्यायो नाड्योः पुनः पुनः॥
शतानि तस्य जायन्ते निःश्वासोच्छ्वासयोर्नव।
खखषट्कद्विकैः सङ्ख्याहोरात्रे सकले पुनः॥
षट्त्रिंशद्गुरुवर्णानां या वेला भणने भवेत्।
सा वेला मरुतो नाड्यन्तरे सञ्चरतो भवेत्॥
प्रत्येकं पञ्च तत्त्वानि नाड्योश्च वहमानयोः।
वहन्त्यहर्निशं तानि ज्ञातव्यानि यतात्मभिः॥
ऊर्ध्वं वह्निरधस्तोयं तिरश्चीनः समीरणः।
भूमिमध्यपुटे व्योम सर्वगं प्रवहेत् पुनः॥

वायोर्वह्नेरपां पृथ्व्या व्योम्नस्तत्त्वं वहेत् क्रमात्।
वहन्त्योरुभयोर्नाड्योर्ज्ञातव्योऽयं यथाक्रमम्॥
पृथ्व्याः पलानि पञ्चाशच्चत्वारिंशत् तथाम्भसः।
अग्नेस्त्रिंशत् पुनर्वायोर्विंशतिर्नभसो दश॥
प्रवाहकालसंख्येयं हेतुर्विङ्गलयोरथ।
पृथ्वी पञ्चगुणा तोयं चतुर्गुणमथानलः॥
त्रिगुणो द्विगुणो वायुर्वियदेकगुणं भवेत्।
गुणं प्रति दशपलान्युर्व्यां पञ्चाशदित्यतः॥
एकैकहानिस्तोयादेस्तथा पञ्च गुणाः क्षितेः।
गन्धो रसश्च रूपञ्च स्पर्शः शब्दः क्रमादमी॥
तत्त्वाभ्यां भूजलाभ्यां स्यात् शान्तिकार्य्ये फलोन्नतिः।
दीप्ता स्थिराधिका कृत्ये तेजो वाय्वम्बरेषु च॥
पृथिव्यप्तेजोमरुद्व्योमतत्त्वानां चिह्नमुच्यते।
आद्ये स्थैर्य्यं स्वचित्तस्य शैत्ये कामोद्भवो भवेत्।
तृतीये कोपसन्तापौ चतुर्थे चञ्चलात्मता।
पञ्चमे शून्यतैव स्यादथवा धर्मवासना॥
श्रुत्योरङ्गुष्ठकौ मध्याङ्गुल्यौ नासापुटद्वये।
सृक्कणोः प्रान्त्यकोपान्त्याङ्गुली शेषे दृगन्तयोः॥
न्यस्यान्तर्भूपृथिव्यादितत्त्वज्ञानं भवेत् क्रमात्।
पीतश्वेतारुणश्यामैर्विन्दुभिर्निरुपाधि खम्।

इत्यादिना यथावद्वायुतत्त्वमवगम्य तन्नियमनं विधीयमानं विवेकज्ञानावरणकर्मक्षयो भवति। तपो न परं प्राणायामादिति।

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।

प्राणायामैस्तु दह्यन्ते तद्वदिन्द्रियपन्नगा इति च ॥

तदेवं यमादिभिः संस्कृतमनस्कस्य योगिनः संयमप्रत्याहारः कर्त्तव्यः। चक्षुरादीनामिन्द्रियाणां प्रतिनियतरञ्जनीयकोपनीयमोहनीयप्रवणत्वप्रहाणेनाविकृतस्वरूपप्रवणचित्तानुकारः प्रत्याहारः इन्द्रियाणि विषयेभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः। ननु तदा चित्तमभिनिविशते नेन्द्रियाणि तेषां बाह्यविषयत्वेन तत्र सामर्थ्याभावादतः कथं चित्तानुकारः सत्यं अतएव वस्तुतस्तस्यासम्भवमभिसन्धाय साद्दश्यार्थमिवशब्दञ्चकार सूत्रकारः स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहार इति। साद्दश्यञ्च चित्तानुकारनिमित्तं विषयासम्प्रयोगः। यदा चित्तं निरुध्यते तदा चक्षुरादीनां निरोधे प्रयत्नान्तरं नापेक्षणीयं यथा मधुकरराजं मधुमक्षिका अनुवर्त्तन्ते तथेन्द्रियाणि चित्तमिति। तदुक्तं विष्णुपुराणे।

शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित्।
कुर्य्याच्चित्तानुकारीणि प्रत्याहारपरायण इति ॥
वश्यता परमा तेन जायतेऽतिचलात्मनः।
इन्द्रियाणामवश्यैस्तैर्योगी योगस्य साधक इति च ॥

नाभिचक्रहृदयपुण्डरीकनासाग्रादावाध्यात्मिके हिरण्यगर्भवासवप्रजापतिभूतिके बाह्ये वा देशे चित्तस्य विषयान्तरपरिहारेण स्थिरीकरणं धारणा। तदाह देशबन्धश्चित्तस्य धारणेति। पौराणिकाश्च,

प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्।
वशीकृत्य ततः कुर्य्याच्चित्तस्थानं शुभाश्रयमिति ॥

तस्मिन् देशे ध्येयावलम्बनस्य प्रत्ययस्य विसदृशप्रत्ययप्रहाणेन प्रवाहो ध्यानम्। तदुक्तं, तत्र प्रत्ययैकतानता ध्यानमिति। अन्यैरप्युक्तम्।

तद्रूपप्रत्ययैकाग्र्या सन्ततिश्चान्यनिस्पृहा।

तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते तथेति॥

असङ्गात्त्वरममङ्गं प्रागेव प्रात्यपीपदाम:।

तदनेन योगाङ्गानुष्ठानेनादरनैरन्तर्यदीर्घकालसेवितेन समाधिप्रतिपक्षक्लेशप्रशमयेऽभ्यासवैराग्यवशान्मधुमत्यादिसमाधिलाभो भवति।

अथ किमेवमकस्मादज्ञानतिविकटाभिरत्यन्ताप्रसिद्धाभि: कर्णाटगौडलाटभाषाभिर्भीषयते भवान्। नहि वयं भवन्तं भीषयामहे किन्तु मधुमत्यादिपदार्थव्युत्पादनेन तोषयाम:। ततश्चाकुतोभयेन भवता श्रूयतामवधानेन। तत्र मधुमती नामाभ्यासवैराग्यादिवशादपास्तरजस्तमोलेशसुखप्रकाशमयसत्त्वभावनयानवद्यवैशारद्यविद्योतनरूपऋतम्भरप्रज्ञाख्यासमाधिसिद्धि:। तदुक्तम, ऋतम्भरा तत्र प्रज्ञेति। ऋतं सत्यं बिभर्त्ति कदाचिदपि न विपर्य्ययेणाच्छाद्यते तत्र स्थितौ दार्ढ्ये सति द्वितीयस्य योगिन: सा प्रज्ञा भवतीत्यर्थ:। चत्वार: खलु योगिन: प्रसिद्धा: प्रथमकल्पिको मधुभूमिक: प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति। तत्राभ्यासी प्रवृत्तिमात्रज्योति: प्रथम:। न त्वनेन परचित्तादिगोचरज्ञानरूपं वै ज्योतिर्वशीकृतमित्युक्तं भवति। ऋतम्भरप्रज्ञो द्वितीय:। भूतेन्द्रियजयी तृतीय:। परवैराग्यसम्पन्नश्चतुर्थ:। मनोजवीत्वादयो मधुप्रतीकसिद्धय:। तदुक्तं

मनोजवित्वं विकरणभावः प्रधानजयश्चेति। मनोजवित्वं नाम कायस्य मनोवदुत्तमो गतिलाभः। विकरणभावः कायनिरपेक्षाणामिन्द्रियाणामभिमतदेशकाल-विषयापेक्षवृत्तिलाभः। प्रधानजयः प्रकृतिविकारेषु सर्वेषु वशित्वम्। एताश्च सिद्धयः करणपञ्चकस्वरूपजयात् तृतीयस्य योगिनः प्रादुर्भवन्ति। यथा मधुन एकदेशोऽपि स्वदते तथा प्रत्येकमेव ताः सिद्धयः स्वदन्त इति मधुप्रतीका सर्वभावाद्यधिष्ठातृत्वादिरूपादिरूपा विशोका सिद्धिः। तदाह, सत्त्वपुरुषान्यताख्यातिमात्रप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञत्वं चेति। सर्वेषां व्यवसायाव्यवसायात्मकानां गुणपरिणामरूपाणां भावानां स्वामिवदाक्रमणं सर्वभावाधिष्ठातृत्वं तेषामेव शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां विवेकज्ञानं सर्वज्ञातृत्वम्। तदुक्तं विशोका वा ज्योतिष्मतीति। सर्ववृत्तिप्रत्यस्तमये परं वैराग्यमाश्रितस्य जात्यादिबीजानां क्लेशानां निरोधसमर्थो निर्बीजः समाधिः असम्प्रज्ञातपदवेदनीयः संस्कारशेषताव्यपदेश्यः चित्तस्यावस्थाविशेषः। तदुक्तं, विरामः प्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य इति। एवञ्च सर्वतो विरज्यमानस्य तस्य पुरुषधौरेयस्य क्लेशबीजानि च निर्दग्धशालिबीजकल्पानि प्रसवसामर्थ्यविधुराणि मनसा सार्धं प्रत्यस्तं गच्छन्ति। तदेतेषु प्रलीनेषु निरुपप्लवविवेकख्यातिपरिपाकवशात् कार्यकारणात्मकानां प्रधाने लयः चितिशक्तिस्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वाभिसम्बन्धविधुरा कैवल्यं लभते इति। सिद्धिद्वयी च मुक्तिकला पतञ्जलिना। पुरुषार्थशून्यानां प्रति-

प्रसवस्वरूपप्रतिष्ठा वा चितिशक्तिरिति। न चास्मिन् सत्यपि कस्मान्न जायते जन्तुरिति वदितव्यं कारणाभावात् कार्य्याभाव इति प्रमाणसिद्धार्थे नियोगानुयोगयोरयोगात्। अपरथा कारणाभावेऽपि कार्य्यसम्भवे मणिवेधादयोऽन्धादिभ्यो भवेयुः तथाचानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थो भवेत्। तथाच श्रुतिः, अन्धो मणिमविन्दत् अविध्यत् तमनङ्गुलिरावयत् गृहीतवान् अग्रीवः प्रत्यमुञ्चत् पिनद्धवान् तमजिह्वो वा असंश्चत अभ्यपूजयत् स्तुतवानिति यावत्। एवञ्च चिकित्साशास्त्रवद्योगशास्त्रं चतुर्व्यूहम्। यथा चिकित्साशास्त्रं रोगो रोगहेतुरारोग्यं भेषजमिति तथेदमपि संसारः संसारहेतुर्मोक्षो मोक्षोपाय इति। तत्र दुःखमयः संसारो हेयः प्रधानपुरुषयोः संयोगो हेयभोगहेतुः तस्यात्यन्तिकी निवृत्तिर्हानं तदुपायः सम्यग् दर्शनम्। एवमन्यदपि शास्त्रं यथासम्भवं चतुर्व्यूहमूहनीयमिति सर्वमवदातम्।

इति सर्वदर्शनसंग्रहे पातञ्जलदर्शनम्।

इतःपरं सर्वदर्शनशिरोमणिभूतं शाङ्करदर्शनमन्यत्र लिखितमित्यत्रोपेक्षितमिति।

सम्पूर्णः।



# खण्डनखण्डखाद्यम् ।

महामहोपाध्याय श्रीहर्ष विरचितम् ।

कलिकातानगरे

श्रीयुक्त बाबु भुवनचन्द्रवसाक-संस्थापित संवाद-ज्ञान-
रत्नाकराख्य यन्त्रे मद्द्वारैव मुद्रितं
प्रकाशितञ्च ।

निमतलाघाट ष्ट्रीट ८ संख्यक भवन ।

सन् १२८४ साल ।

# खण्डनखण्डखाद्ये



## प्रथमः परिच्छेदः ।



अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु । ईश्वरमुमया न परं वन्देऽनुमयापि तमधिगतम् ॥

मानोपनोदनविनोदनते गिरीशे
भासेव सङ्कुचितयोरुचितस्तदिन्दोः ।
भेत्तुं भवानिशचितं दुरितं भवानि
भृङ्गीभवानि घनभक्तिसरोजयोस्ते ॥

शब्दार्थनिर्वचनखण्डनया नयन्तः
सर्वत्र निर्वचनभावमखर्वगर्वान् ।
धीरा यथोक्तमपि कीरवदेतदुक्ता
लोकेषु दिग्विजयकौतुकमावहध्वम् ॥

अथ कथायां वादिनोनियममेवाद्यां मन्यन्ते प्रमाणादयः सर्वे तत्त्वसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयं । तदपरे

न क्षमन्ते। तथाहि प्रमाणादीनां सत्त्वं यद-भ्युपेयं कथकेन तत् कस्य हेतोः किं तदनभ्युप-गच्छद्‌भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसा-हित्यनियतस्य तस्य प्रवर्त्तयितुमशक्यत्वात् उत कथकाभ्यां प्रवर्त्तनीयं वाग्व्यवहारं प्रति हेतु-भावात् उत लोकसिद्धत्वात् अथ वा तदनभ्यु-पगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वात्। न तावदाद्यः तदनभ्युपगच्छतोऽपि चार्व्वाक-माध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वात् तस्यैव वा अनिष्पत्तौ भवतस्तन्निरासप्रयासा-नुपपत्तेः। सोयमपूर्व्वः प्रमाणादिसत्त्वानभ्युप-गमात्मा वाक्सम्भवप्रत्यो भवताभ्यूहितो नूनं यस्य प्रमाणाद्भगवता सुरगुरुणा लोकायतसू-त्राणि न प्रणीतानि तथागतेन वा मध्यमागमा नोपदिष्टाः भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि। प्रमाणाद्यनभ्युपगमेपि प्रवर्त्तमाना तत्कथा बाधोभङ्गाः तास्तु साधनबाध-नक्षमा न भवन्ति तावतेति ब्रूमहति चेन्न प्रमाणाद्यनभ्युपगम्य प्रवर्त्तितत्वं तदीयसाधन-बाधनाक्षमतायां न नियामकं किन्तु सद्वचना-

भासलक्षणो नित्यमित्यवश्याभ्युपेयं। भवता येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्तिताः मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैर्मतान्तरव्यवहारादिभिरपरैस्तथाभूता इति कथ्यन्ते। यदि त्वमिदृशमसद्व्यवहाराभासलक्षणं न भवान् दर्शयितुमीष्टे तदा अनभ्युपगम्य प्रमाणादि भवता प्रवर्तितोयं व्यवहार इति शतकृत्वस्त्वयोच्यमानेऽपि नास्माकमादरः अन्यथाभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोयं व्यवहार इत्येतावता भवदीयो व्यवहाराभास इत्यस्माभिरपि वक्तुं शक्यत एव। ननु यदि प्रमाणादीनि न सन्ति व्यवहार एव अयं कथं सिद्ध्येत् दूषणादिव्यवस्था वा कथं स्यात् सर्व्व विधिनिषेधानां प्रमाणाधीनत्वात्। मैवं। न भूमोवयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति। किन्नाम सन्ति न वा प्रमाणादीनीत्यस्यां चिन्तायामुदासीनै र्यथा स्वीकृत तानि भवता व्यवह्रियन्ते तथा व्यवहारिभिरेव कथा प्रवर्त्त्यतामिति अन्यथा न सन्ति प्रमाणादीनीति मत मस्माकमारोप्य यदिद-

अथवा दूषणमुक्तं तदपि न वक्तुं शक्यं कीदृशीं मर्य्यादामालम्ब्य प्रवर्त्तितायां दूषणमुक्तं किं प्रमाणादीनां सत्त्वमभ्युपगम्योभाभ्यां वादिभ्यां प्रवर्त्तितायां कथायाम् उत सत्त्वमनभ्युपेत्य अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य । न तावदाद्यः अभ्युपगतप्रमाणादिसत्त्वं प्रति तादृक्पर्य्यनुयोगानवकाशात् द्वितीये तु स्वतोऽप्राप्तेः न तृतीयः तथैव कथान्तरस्य प्रसक्तेः उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य अन्यथा स्वाभिप्रायमालम्ब्य तेनापि तद्वचसि यत्किञ्चिद्रागात्मनि दूषणेऽभिहिते कस्य नो व्यवतिष्ठताम् प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात् तस्मात् प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमे समयं बद्ध्वा कथायां प्रवर्त्तितायां भवतेदं दूषणमुक्तं युक्तमेव तथा सति स्यात् योऽयं भवान् स्वाभिप्रायमपि नावधारयितुं शक्तोऽतिदूरत तस्मिन् पराभिमतत्वानावधारणप्रत्याशा । अथ वादीकृत्य दुर्वैतण्डिकं त्वामस्मान् बोधोऽभिधीयत इत्येव नेष्यते भिन्नहृदयस्तु तस्य

कथानधिकारं ज्ञाप्यते अतएव भाष्यकारः सप्रयोजनमनुयुक्तो यदि पद्यतइत्याह ननु प्रतिपद्यसइति । मैवम् । शिष्यादीन् प्रत्यपि चार्व्वाकादेर्दोष्यत्वमित्येवाभिधातव्यम् । कथञ्च तथा स्यात् तस्य कथाप्रवेशात्तयोस्तद्बाधाच्चम-त्वात्कथायामेव हि निग्रहः । नापि द्वितीयः तथाहि स्यादप्येवं यदि कथकप्रवर्त्तनीयवाग्व्य-वहारं प्रति प्रमाणादीनां हेतुता तत्त्वान-भ्युपगमे निवर्त्तेत नचैवं सम्भवति तथा सति तत्त्वानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत हेत्वनुपपत्तेः । उक्तञ्चाहमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपाप-लापो न शक्यत इति । अथ मन्यसे कथकवाग-व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्वं सत्वाच्चाभ्युपगमः यत्सत्तदभ्युपगम्यद्दृष्टिस्थितेः-रिति । मैवं । कथापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्वं सत्वाच्चाभ्युपगमो भवता प्रसाध्यः कथनारपूर्व्वं तत्तत्त्वावधारणं वा पर-म्पराजयं वा अभित्तगड्डो कथकाभ्यां यावता

विना तदभिलषितं न पर्य्यवस्यति तावदनु-
रोद्धव्यम् तच्च व्यवहारनियमस्यानुबन्धादेव
द्वाभ्यामपि ताभ्यां सम्भाव्यतइति व्यवहार
नियमसमयमेव बध्नीतः सच प्रमाणेन तर्केण
च व्यवहर्त्तव्योवादिना प्रतिवादिनापि कथा-
ङ्गतत्वज्ञानविपर्य्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमं
निग्रहस्थानं तस्य दर्शनीयम् तद्व्युत्पादने प्रथ-
मस्य भङ्गोव्यवहर्त्तव्य नियमवत्वेपि हेतुर्वक्तव्यः
तथा च सोपि हेतुः कथायां प्रवृत्तायामभि-
धातुं युक्तइति प्रमाणसत्वाभ्युपगमहेत्वभि-
धानवत् प्रत्यवस्थान मनवकाशं द्वाभ्यामपि
वादिभ्यां विचारप्रवृत्तत्राभिलष्यमाणतत्त्वव्यवस्था-
श्रयमूलत्वेन व्यवहारनियमस्य स्वेच्छयैव परि-
गृहीतत्वात्। नचैवं प्रमाणानुपपन्नस्वेच्छामात्र-
गृहीतमूलत्वान्मूलापरिशुद्धिसम्भवेन सर्व्व वि-
चारविचार्य्यतत्फलविप्लवापत्तिः स्यात्। स्या-
वेद्यमानादिपारम्पर्य्यायातस्य लोकव्युत्पत्ति-
गृहीतत्वादस्य च तस्यान्यथाभावासम्भाव्यता
लक्षणस्वतःसिद्धियुक्तत्वात्। नच प्रमाणादीनां
सत्तापीत्थमेव ताभ्यामङ्गीकर्त्तुमुचिता तथच-

व्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः प्रमाणादिसत्तामभ्युपेत्यापि तथा व्यवहारनियमव्यतिरेके कथा प्रवृत्तिं विना तत्त्वनिर्णयस्य जयस्य वाभिलषितस्य कथककयोरपर्य्यवसानात् । नापि तृतीयः लोकव्यवहारो हि प्रमाणव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा । नाद्यः । विचारप्रवृत्ति मन्तरेण तस्य दुर्निरूपत्वात् तदर्थमेव च पूर्व्वं नियमस्य गवेषणात् । नापि द्वितीयः शरीरात्मतादीनामपि तथा सति भवता स्वीकर्त्तव्यता पातात् । पश्चात्तद्विचारबाध्यतया नाभ्युपेयतइति चेत् तर्हि प्रमाणादयोपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यतइति तावन्न भवति । नापि चतुर्थः यादृशोभवताप्रमाणादीन्यभ्युपगम्य व्यवहार नियमः

तस्यैव प्रमाणादितत्त्वा-

सत्त्वानुसरणोदासीनैरस्माभिरवलम्बनात् । तस्य यदि मां प्रतिफलास्ति प्रसञ्जकत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः ।

स्यादेतन्नियतवाग्व्यवहारक्रियासमयबन्धेन कथां प्रवर्त्तयतापि व्यवहारसत्तामुपगन्तव्या नहि सत्तामनभ्युपगम्य व्यवहारक्रियाभिधातुं शक्या। क्रिया हि निष्पादना असतः सद्रूपताप्रापणमिति यावत् प्रमाणैर्व्यवहर्त्तव्यमिति नियमबन्धने प्रमाणकारणभावस्य नियमात् तद्भावस्य नियतपूर्व्वसत्त्वरूपं कारणत्वं प्रमाणानामनादाय न पर्य्यवस्यात्। दूषणानाञ्चास्तित्वेन भङ्गावधारणनियमबन्धने साधनाङ्गानां व्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च कारणत्वमेव तस्य तस्य सत्त्वमङ्गीकृतमितिरिक्तमिदमुच्यते प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भाः प्रवर्त्तन्त इति। नैवम्। एभिरपि बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाधनीयत्वे पूर्व्वोक्तबाधायामनिस्ताराात्। ननु व्यवहारनियमस्य स्वेच्छाकल्पनस्यैव प्रमाणादि सत्तास्वीकारपर्य्यवसायित्वथा नायं दोषः स्यात् यतः सत्ताभ्युपगमस्य तथाकृत्वं ननु सत्ताधीः। तत्र किं सत्तावगममात्रात्सत्ताभ्युपगम्यत इति मन्यसे य-

बाधितात्तत्त्वमात्रम् । न तावदाद्यः मरुमरी-
चिकादौ जलस्वरूपतामङ्गावाभ्युपगमप्रसङ्गात् ।
द्वितीयेऽपि किं वादिप्रतिवादि मध्यस्थमात्रस्य
तस्यापि कथाकालमात्र एव बाधितत्वावगमाभा-
वात् । अथवा कस्यचिदपि कालान्तरेऽपि च
बाधितबोधविरहात् । नाद्यः अतिप्रसङ्गात्
पुरुषत्रयावगतस्यापि एकक्षणावगतस्य च
पुरुषान्तरेण तेनापि क्षणान्तरे बहुत्वं बाध्य-
तादर्शनादिति । न चासावर्थोऽसन्नपि द्वित्वा-
दिपुरुषप्रमात्रपूर्व्वज्ञाततत्प्रतीत्यनुरोधाद्बाधद-
र्शने सत्यपि तथैव सन्नित्यभ्युपगम्यते तस्मात्-
द्वितीयः पक्षः परिशिष्यते यत्र सर्व्वप्रकारेण
बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम् ।
तदिदं यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य
दूषणादिसत्ताविगमः कथा कालमात्रे तैरब-
ध्यमानः कथाङ्गत्वेनाभ्युपेयते किमायातं
सर्व्वप्रकाराबाधितत्तत्त्वावगमाय तत्तत्त्व-

तिपक्षकृतिप्रयुक्तकथात्वावस्थापनेन च प्रायेण
लौकिकव्यवहारः प्रतीयते तादृशञ्चायं सत्त्वा-

वगमः कथाङ्गमेतत्तदुच्यते व्यवहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति। तस्मात्सद्व्यवहारनियमः स्रतः तन्मर्य्यादावेन नोल्लङ्घितेति। यद्वादिवाग्व्यवहारे मध्यस्थावगमः स विजयते यस्य च वचसि नैवं तस्यावगमस्तस्य पराजयः यत्र वाद्युक्तनिग्रहसत्त्वावगमः स निगृहीतः तदितरस्तु न तथेत्यादिनियमएव कथारम्भाय ग्राह्यः अनेन नियमेन व्यावहर्त्तव्यमित्यस्य त्वयमर्थोऽनेन नियमेनोक्तमनेनेति मध्यस्थावगमस्य विषयो भवितव्यमिति। नच वाच्यमन्ततस्तदवगमस्यापि सत्ताभ्युपेयेति। तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात्। नचैवमनवस्था तदनुसरणावश्यम्भावानङ्गीकारात् एवं विचतुरमानजन्मनोनाधिकमतिरिति न्यायात्। नचान्तिमासत्त्वे पूर्वपूर्वप्रवाहासत्त्वापत्तिस्तथाचावगममादायापि न निस्तार इति वाच्यम्। अस्त्वेव हि तथा विचतुरमानकक्षानवेषणमात्रविश्रान्तेन विचारेण ततःपरमननुसरणरमणीयेनैव समर्थं बुद्धा कथाया

मिथःसम्प्रतिपत्त्या प्रवर्त्तनात्। अन्यथा प्रमाणादिसत्ताभ्युपगमेपि ज्ञानानवस्थाया दुष्परिहरत्वात्। नच वाच्यं मत्पक्षे स्वरूपसत्ताज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् न ज्ञानस्य परम्परानुसरणमुचितं नत्वेवं त्वत्पक्षे ज्ञानस्वरूपसत्ताङ्गीकारप्रसङ्गादिति। स्वरूपसत्तामादायापि परिहरतोऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात्। यथा त्वत्पक्षे स्वरूपसदविशेषेऽपि ज्ञानस्वरूपसत्त्वैव परं व्यवहारोपपादिका न घटादिसत्ता एवमेवासत्त्वाविशेषेपि ज्ञातमेवासद्व्यवहारोपपादकं नान्यत्। असत्त्वोपपादकत्वेति व्याहतमिति चेन्न सदुपपादकमिति कुतो न व्याहतम्। नहि सदुपपादकमसच्च नेति क्वचिदावयोः सिद्धम्।॰ ननु तदसत्ताविशेषात्तत्कार्य्यस्यान्यदापि प्रसङ्गः न कार्य्यस्याद्यसत्ताप्रसङ्गवान्यदापि सामग्रीसत्ताविशेषात्तवापि किं नान्यदा कार्य्यजन्म। अथ न मम तदानीन्तनं सामग्रीसत्त्वं तदातनस्य कार्य्यजन्मनो नियामकं किन्तु ततः प्राक् सामग्रीसत्त्वं तथाच्चमात

तर्हि ममापि कालान्तरस्थमपि तदसत्वं तदा-तनकार्य्यजन्मनोनियामकं तथादर्शनादेव। मम तदव्यवहितोत्तरत्व तदा कार्य्यनियामकमिति चेत् न समसमयत्वादागन्तुकत्वाद्याविशेषेण नियम्यनियामकव्यवस्थानुपपत्तेः तस्मादन्यदा-स्थाया एव सामग्र्या स्तदा कार्य्यनियमोभ्यु-पेयः तथादर्शनादित्येव मन्तव्यम्। तथा च समः समाधिः तथापि कार्य्यजन्मकालस्य को-विशेषः। कार्य्यजन्मैव। अन्यथा यद्विशेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादिति अप-र्य्यवसानमेव पर्य्यवस्येत् तथापि तत्कालस्यानु-गतं किं रूपमिति चेन्न रूपान्तर वतोपि किं रूपमित्यपि पर्य्यनुयोगस्यानुवृत्तेः। किञ्च

"अन्तर्भावित सत्वञ्चेत्कारणं तदसत्ततः।
नान्तर्भावितसत्वञ्चेत्कारणं तदसत्ततः।"

तथाह्यन्तर्भूतसत्वे यदि कारणत्वं तदा स्व-विशिष्टे स्वंवृत्तिरसतः स्वाश्रयत्वमापादयति। विशिष्टस्यार्थान्तरत्वेपि च तस्मिन् सद्वृत्ति व्यतिरेकावत् स्वविशिष्टे सद्वृत्तिव्यतिरेक-नियमदर्शनात् न सैव सत्ता तस्मिन्निति

अन्यथा सत्तावैशिष्ट्यत्राभ्युपगमे तामसन्नि-
वेश्य कारणत्वमभ्युपगन्तुः सर्व्वथैव कारणमस-
त्पर्य्यवस्यति। अपरापरसत्तानिवेशने वा पर्य्यव-
सानमेव। नच सत्ताभेदानन्तप्रसक्तेरत्रेत्यपि पाद-
प्रसारिका निस्ताराय सत्ताभेदे हि सद्बुद्धिव्यव-
हारानुगमननिबन्धनलक्षिनः प्रथमापि सत्ता
न स्यादिति सत्वबुद्धिमिष्टवतो मूलमपि ते नष्ट-
मिति कष्टतरम्। नच स्वरूपसत्तोपगमाय
स्वस्ति भिन्नानत्यनुगत बुद्ध्याद्याधानपदेऽभि-
षिञ्चता त्वया जातिमात्राय जलाञ्जलिर्व्वितो-
र्य्येत। माभूदनुगतिः स्वरूपसत्वस्येति च वदन्
तद्धर्म्मिणीं कारणतां कथमनुगमयितासीति।
किञ्च स्वरूपसत्वं स्वरूपात् घटाद्यात्मनो ना-
धिकमसतोपि स्वरूपं स्वरूपमेव न ह्यसन्
घटादिर्न घटादिः तथा सति घटादिर्नेत्यपि न
स्यात् असतोऽघटादित्वात्। अथ सदपि सत्ता
नमन्तर्भाव्य कारणं तदानीमसदपि तत्तयास्तु
सत्तासत्तयोः कारण कोट्यप्रवेशाविशेषात्।
अथ न सत्ता कारणकोटिनिविष्टा किन्तु कार-
णत्वं सत्वं नियतपूर्व्वसत्तां हि कारणताम्मन्य

इति मन्यसे तर्हि मन्यसे नैव कारणतास्तु तर्हि कारणसत्तामभ्युपगतवानसीति [illegible] प्रभातमिति चेन्न भावानवबोधात् सत्तामसतीमभ्युपगच्छतापि सत्ता मयाभ्युपगतैव । अन्यथा कामासवसतीति त्वमपि किं सत्तान्तरसत्तामन्तर्भाव्य कारणत्वमिच्छसि । नत्वेवं पूर्व्ववत् क्वापि सत्तात्यागो वा अनवस्थायां पर्य्यवसानं स्यात् । असत्ताविशेषात्कारणनियमः कथं स्यादिति चेन्न सत्ताविशेषेपि तुल्यत्वात् । सत्वेऽस्त्वन्वयाद्यनुविधानं तस्य तज्जातीयस्य वा त्वत्पक्षेत्वसत्त्वाविशेषात् व्यतिरेकः परं सोप्यनियतो यदा कारणाभाव स्तदा कार्य्याभावावश्यम्भावानभ्युपगमात् नित्यासतः कारणस्यासत्वएव कदाचित्कार्य्योत्पादात् अन्वयस्तु न कदाचिदपीति चेन्न तुल्यत्वात् । अन्वयो नास्तीत्यभ्युपगच्छतापि अन्वयोपगमात् । अन्वयस्यापि सत्तान्तर्भावने कथितदोषापत्तेः । एतेन "मायामोहककरम् ये चोपार्जित मोदकाः । रसवीर्य्यविपाकादि तेषां तत्त्वं न पच्यते," इत्यस्यापि बाधकत्वमायामोदमावते । सत्तान्तर्भा-

वान्तर्भावाभ्यां प्रकारद्वयात् प्रागभावोऽकारि-
नापि च सामग्रीर्य्यविपाकादिजननात्। तदेव-
त्कथं कार्य्यं स्यादिति चेन्न तत्तामन्तर्भाव्य
कार्य्यत्वोपगमे कारणत्वकार्य्येऽपि तत्ताद्योपस्था-
नन्तर्भावे वा विशेषस्य पूर्ववदापत्तेः तस्मात्
''पूर्व्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ। हेतु-
तत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा।,, आस्तां
प्रतिबन्दिग्रहग्रहः कथं पुनरसतः कारणत्वमव-
सेयं प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमात्
असत्त्वस्य चाविशेषादिति चेन्न इदमस्मान्नियतं
प्राक्सदितिबुद्ध्याविशेषात्। भ्रान्त्यैव बुद्धिगोच
रेतिप्रसङ्ग इति चेन्न यादृश्या हि धिया विच-
तुरकथा बाधानवरोधविश्रान्तया वस्तुसत्त्वनि-
श्चयस्ते तादृश्यैव विषयीकृतस्य ममापि कारण-
तानिश्चयः केवलन्ततः परास्वपि कक्षासु बाधात्
पूर्वपूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं
वयं मन्यामहे इति विशेषः। परदर्शनसिद्धा-
न्तस्य पूरिकक्षाबाधाविनोऽपि ततः परकक्षाबाध्य
मानत्वेनाकथाभावोपगमात् अन्यथैकदर्शन-
परिप्लवः स्यात्। एतेन सत्त्वाविशेषात् कथं

विशिष्टव्यवहारनिदानत्वमसतो विषयस्य कारण शक्तेश्च विशेषकमसदेव कार्य्यं नच कालान्तरसम्बन्धिनो सत्ता तस्या एकत्रान्यत्र नान्यदापीति वैधर्म्यमेतयोरपीति वक्तव्यं विशिष्टव्यवहार प्रवृत्तिसमये द्वयोरप्यसत्त्वाविशेषात्। प्रयोजनानुपयुक्ते काले तस्य स्वरूपतोवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवृत्तान्तमनुहरति तथापि कालान्तरस्थित्या घटादिकं स्वरूपतो विशेषणतस्य व्यवच्छिन्नं तद्विज्ञानेन स्वभावबलात्स्वविशेषणत्वेनोपादीयते। नन्वेवमत्यन्तासद्भवितुमर्हति तस्य स्वरूपतो विशेषणतस्य व्यवच्छिन्नतया नङ्गीकारात्कुत्र स्वभावतो विज्ञानं सम्बन्धि निरूप्यते न उक्तमत्र असतोपि तदेव रूपं तस्य नियतस्वरूपतैव नियतविशेषणस्यैवासत्त्वादन्यथातिप्रसङ्गात् भ्रान्तिविषयेण दत्तोत्तरत्वाच्चेत्यलमतिविस्तारेण।

अपरे पुनश्चेतसोपि शून्यताङ्गीकारे मनः प्रत्ययमनासादयन्तः सर्व्वमिदमसदेव विश्वमित्यभिधातुं नोत्सहन्ते स्वसामर्थ्यान्ते ज्ञानं तावत् स्वप्रकाशं स्वतएव सिद्धरूपं न खलु चि-

ज्ञाने सति जिज्ञासोरपि कस्यचिज्जानामि न वेति संशयः न जानामीति वा विपर्य्ययो व्यतिरेकप्रमा वा तेन जिज्ञासितस्यातत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वाव्यापकं जिज्ञासितस्य प्रमितत्वमानयति अन्यथा हि जिज्ञासित प्रमितत्वव्यतिरेकव्यापकं जिज्ञासितव्यतिरेकोऽपि ज्ञानमविमित जिज्ञासस्य स्यादतः सर्व्वजनस्वात्मसम्वेदनसिद्धं बोधस्य स्वरूपम् व्यवसायस्यानुव्यवसायनियमात् न तत्र संशयादिरिति चेन्न यत्रैवानुव्यवसायेयत्ता नोपेया तत्र जिज्ञासायामात्मधर्मिकं तत्संशयमारभ्य व्यवसायविषयपर्य्यन्तं संशयाक्रान्तेर्दुष्परिहरत्वात्। विषयिसद्भावसंशये च तद्विषयेपि संशयस्य सम्भवात् एवं हि त्रिचतुरसम्वेदन कक्षाज्ञानध्रौव्यनियमाभ्युपगमोपीति स्वप्रकाशनुमानमेव व्यवस्थाया अभावादेव तदाश्रया दोषा निरवकाशाः अन्यथा तु बोधस्वरूपमेव नः सिद्धेत् यदि हि विज्ञानं परतः सिद्धेत्तदा अनवस्था स्यात् तत्र मा स्वसम्वेद्यता वित्तेरभ्युपेयते स्वार्थव्यवहारस्तु स्वरूपसत्तया

प्रसूयत इति ज्ञानवस्थेति यतस्तस्यां प्रमाणा-
नुपन्यासे स्वरूपसत्तापि कुतो यथा व्यवहारोप-
पत्तिः को ब्रूते सती सा वित्तिरसत्येव न
कुतः सामान्यतो वित्तेस्तथात्वविधावपेक्षित
सिद्ध्या यत्र विशेषरूपायां प्रमाणाप्रवृत्तिः
तदा तत्र सत्वसाधनम् । सत्वेपि जिज्ञा-
सायां सत्यां पश्चाद्व्यवहारसत्त्वैव वा अन्यद्वा
प्रमाणमस्त्वेवेति चेन्न तस्यापि सत्वं कथ-
मित्यनवस्था स्यात् शेषासिद्ध्या सर्वासिद्धिर्वा
प्रसज्येतेत्यर्थासिद्धिपर्य्यन्तस्य व्यसनस्य दुरु-
त्तरत्वात् सेयमप्रत्यक्षोपलम्भस्य नार्थदृष्टिः
प्रसिद्ध्यतीति । घटसत्तां हि व्यवहरता प्रामा-
णिकेन तत्र प्रमाणसद्भावो वाच्यः यदि प्रमाण-
मनुपन्यस्य सास्तीत्यङ्गीक्रियते तदा वैपरीत्यमेव
किन्न स्यात् ततश्च घटसत्तायां प्रमाणसत्ता
दर्शनीया । तथा च प्रमाणसत्तापि तत्प्रमाण-
सत्तामन्तरेण न प्रामाणिकस्याङ्गीकाराद्वा
सर्वप्रमाणसत्तानिष्ठस्वेष्टसत्तानिष्ठत्वनियत-
त्वात् । अन्यथा सप्तमरसादेरप्यापत्तेरिति
व्यक्तमनवस्थादोषग्रस्तमप्रमाणवादिनः स्यात् ।

यदि हि विनैव प्रमाणसत्तां परोक्ताक्कीकार्य्येत तदा घटसत्तामपि तथैवाङ्गीकार्य्यमिति घटेपि इथा प्रमाणोपन्यासायासः। अथ नाव्यवधान-लग्नवित्तितद्वित्तिधाराभ्युपगम्यते किन्नाम कदाचित् कुतश्चित् वित्तिः प्रमीयत इति सर्व्वा वित्तिः प्रमाणसिद्धैवेत्यभ्युपेयत इति चेन्न स्याद-प्येवं यदि घट इति घटं जानामीत्यतोधिका घटवित्तितद्वित्तिधारया विषयभावेन प्रविष्टया तादृग्विषयशतभारमन्थरा वित्तिरस्मदादेरु-त्पद्यमानानुभूयत। यद्यस्मदादिविलक्षणजन्मनि सा सम्भाव्यते तदा यस्या अपि वित्ते तावद्वि-षयगर्भिताधी विषयः साप्यन्यया कयाचिदुल्ले-ख्येत्यत्र प्रमाणाभावश्चानिर्मोक्षापत्तिश्च। नहि स्वमनन्तर्भाव्य कयाचिद्धिया स्वप्रवाहो ग्राह्यः तथा सति स्वप्रकाशसिद्धेः अतएवान्योन्यविषयं-तापि निरस्ता सविषयकान्योन्यग्रहे स्वप्रका-पत्तेः। नच पुरुषान्तरेण सा प्रमास्यते नतु वद-भाव इति ते प्रमासि तदर्थमपि प्रमाणान्तर सद्भावपरम्परापत्तेः। नचैवं घटसामग्री तत्सा-मग्रीमवेषणेप्यनवस्था स्यात् वैयर्थ्यात् यदि घट-

सामग्री तत्सामग्रीधारा कुर्वद्रूपविच्छेदेन तदा घटः सदातनः स्यादित्यर्थापत्त्यैव घटः सामग्री-परम्पराविच्छेदविरहित एव प्रतीयते यदि तु ज्ञानेष्वेवं स्यात्तदा स्वस्य प्रवेशात् स्वप्रकाशा-प्राप्तिः प्रवेशादनवस्था अवेदने शेषासिद्ध्या सर्वा-सिद्धिरिति व्यसनं दुरुत्तरमेव । ये च मानमेय-भावाश्रया दोषाः कीर्त्तनीयास्तेपि प्रसज्येरन् । नच तैर्दोषै नास्त्येव ज्ञानमित्याख्येयं स्वतः सर्व्वसिद्धस्य दुरपह्नवत्वात् स्वप्रकाशाङ्गीकारा-देव चानुभवस्य सर्व्वदोषहानेर्वक्ष्यमाणत्वात् प्रकाशात्मतामात्रस्यैव स्वतः सिद्धिसम्भवे जडा-त्मनां धर्माणां केषामपि तदन्तर्भावानुपपत्तिः अतएव धर्मोपग्रहप्रवर्त्तितु वाग्व्यवहारविषयत्वं कालानवच्छेदमादाय नित्यतोपचारः देशानव-च्छेदमादाय विभुत्वव्यपदेशः प्रकारानवच्छेद-विरहनिबन्धनश्च सर्व्वात्मत्वाद्वैतादिव्यवहारः सौगतप्रभाकरवत् अभावे अभावं प्रति नैया-यिकवत्स्वभावानतिरेकस्वीकाराद्वाद्वैता व्या-घातः अदकियपनिषेधस्य प्रतियोगिनः सर्व्वथै-वासत्त्वापि न काचित् क्षतिः । तदेतत् युक्ता

मिति चेन्न अपादानस्यातिव्याप्तेः अपादानं कर्मापीति चेन्न वृक्षात्पर्णं पतति वृक्षं पर्णं पततीत्यपि स्यात् विवक्षातः कारकाणि भवन्तीति तदविवक्षातो नैवमिति चेन्न वस्तुसतस्तादृप्यस्य यदि विवक्षा स्यात् तदा तदपि स्यात् अपादानस्य कर्मत्वं न विवक्ष्यत इति शाब्दिकसम्प्रदाय इति चेत् तर्हि निहत्तसर्व्वकर्म्मव्यवहारेपि स्वसतकर्मलक्षणानुरोधेन कर्मत्वमभ्युपगच्छता वस्तुमात्रं कर्मेत्यपि लक्षणं सावकाशितं स्यात् कथञ्च लोकोत्तरप्रज्ञेन निहत्तसर्व्वकर्म व्यवहारेपि कर्मत्वमस्तीति ज्ञातम् अपादानेतरदीप्सितं कर्मेति चेन्न तत्रापि नदी वर्द्धत इत्यादौ तद्वृद्धेरप्राप्ततीरभागप्राप्तिफलायाः सकर्मत्वापत्तेः अपादानेतरदित्यस्य स्थाने क्रियानाशकेतिकरणेऽप्यस्य तदवस्थत्वात् विभागलक्षणायां हक्षौ तदयोगाच्च वृक्षं त्यजतीत्यादावकर्मकत्वप्रसङ्गाच्च । आत्मानं जानामीत्यत्र च परत्वाभावादकर्मकत्वापत्तेः । तत्राप्युपादिभेदात्परत्वं कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमादिति चेन्न कतोऽस्तु तावदेवं यथा कथ-

ञ्चिन्तथाप्यध्यात्मविदो निरुपाधिमात्मानं जानतोज्ञानं नात्मकर्मकं स्यात्। पच्यते ओदनः स्वयमेवेत्यादौ कर्मकर्त्तरि का गतिः स्यात् सर्व्वज्ञमीश्वरमन्यमानेन च नित्यज्ञाने तस्मिन् भगवति फलनाश्रयत्वस्यानभ्युपगमात् तं प्रत्येतल्लक्षणासिद्धिः तस्माद्याकरणकारैः शब्दसिद्ध्यर्थं नदी वृद्ध्यादिवत्कर्म्मापि परिभाषितमित्यलं तदनुगतलक्षणगवेषणया शेषञ्चेश्वराभिसन्धौ स्वप्रकाशवादे निर्व्वक्ष्यामः।

ननु चाभेदे विषयविषयिभावस्यैवासङ्गतत्वम्। विषयित्वं हि विषयसम्बन्धिता सम्बन्धश्च भेदमन्तरेणासम्भवदवस्थितिः सम्बन्धमितेः सम्बन्धिस्वरूपभेदमितिव्यतिरेके वैपरीत्यावधारणात्। नैवम्। विषयविषयिभावो हि सम्बन्धो न सम्बन्धिस्वरूपाद्भिन्नः तथाभूतत्वेऽपि च अन्ततस्तत्सम्बन्धस्यापि स्वाश्रयात्मकात्वमभ्युपेतव्यमनवस्थाभयात् तथा सति च सैव यथा सम्बन्धमितिः सम्बन्धस्वरूपात्तत्सम्बन्धिनोर्भेदमनाद्यायैव पर्य्यवसितावभ्युपगन्तव्यं समावसम्बन्धस्येतरसम्बन्धमर्य्यादाविश्रामित्वात् तथा

विनापि सम्बन्धिभेदं विषयविषयिभावात्मायं सम्बन्धः पर्य्यवसास्यति तदवगमोपि तदवगमाव्यतिरेकेणैव भविष्यति को विरोधः। नचैवं घटतज्ज्ञानयोर्यादृग्विषयविषयिभाव स्तन्मात्रयापि स्वप्रकाशविषयविषयिभावान्यत्वे बाध्यतैकत्र स्यात् अस्तेरवच्छ्यविद्याविद्यमान घटतज्ज्ञाने बाध्यत्वं परमार्थे सति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेपि न दोषः। अथ वा स्वात्मना सह क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशार्थ इति नाभ्युपेयमेव यथा तु भवतां सत्तासम्बन्धादितरत्र सद्व्यवहारव्यवस्था सत्ता स्वयमेव सद्रूपा नच तावता स्वात्माश्रयता तस्यास्तथा ज्ञानमपि स्वतएव सिद्धस्वरूपम्। अथवा यथा बहुव्रीहिसमासे तद्गुणसम्विज्ञाने गुणमादायैव प्रधानस्यान्यपदार्थस्य बहुव्रीहिसिद्धपदप्रतिपाद्यता तथा विज्ञानस्याविषयमपि स्वात्मानमादायैव स्वविषयव्यवहारप्रवर्त्तनं समर्थ्यतांसोयं गुरूणां सविषयकविज्ञानस्वप्रकाशतापक्षो न ब्रह्मस्वप्रकाशता तत्र विषयाभावात् एतावन्मात्रेण तु स्यात् यथा स्वविषयेपि कुटादौ

बहुव्रीहि वाक्यं व्यवहारं प्रवर्त्तयति तथा ज्ञानमविषयेप्यात्मन्यविद्यादशायामिति। तदेवं यद्यन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्य्यवस्यति तत् सर्व्वमन्यथानुपपत्तिरेव स्वप्रकाशप्रसाधकतया प्रदर्शिता स्वीकारयति। तद्यथा अन्योज्ञाता अन्यश्च ज्ञेय इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुपपत्त्या त्याज्यं तथा अन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथानुपपत्त्या त्याज्यं सर्व्वतोबलवती ह्यन्यथानुपपत्तिः तथा दृष्टतामात्रमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते तदिदमाहुः। “प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि अदृष्टशतभागोपि न कल्प्यो निष्प्रमाणक इति।,, तस्मात् “अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका। पिनष्टि दृष्टवैमत्यं सैव सर्व्वबलाधिका। याच्यान्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः नह्येकत्र समावेशश्छायातपवदेतयोरिति।,, तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवं विधैर्व्विचारैः स्वप्रकाशता भवता सुप्रतिपदा। अस्माभिस्तु स्वसम्वेदनबलादेव स्वतःसिद्धिरूपं विज्ञानमाश्रियत इति एवञ्च

सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्व्वचनीयं वर्णयति। यदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते। अतो निरभिलाप्यास्ते निःस्वभावाश्च देशिता इति।" ज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिनः सङ्गिरन्ते। तथा हि नेदं सद्भवितुमर्हतीति वक्ष्यमाणदूषणग्रस्तत्वात् नाप्यसदेव तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः। यदपि निर्वक्तुमसामर्थ्य गुरव उपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्त इत्युपालम्भवचनं तत्तदा शोभते यदि मेयस्वभावानुगामिनीयमनिर्व्वचनीयतेति नब्रूयु र्वक्तृदोषादिति च वदेयुः। यस्तु यस्तु वादी निरुक्त्यभिमानं धत्ते स निर्वक्तु न तु शक्ष्यति वक्तव्यदोषात्। नच ते दोषाःस्वोक्तिमपि भक्तो जातयः कथं न स्युरिति वाच्यं यतोनिर्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्वचनीयैरेव अनिर्वचनीयैरपि च तैर्व्यवह्रियत एवेति कुतोऽस्मान् प्रति व्याघातः स्यात् तज्जातीयत्वस्य च निरुच्य योजयितुमशक्यत्वात्। ननु

सदसत्त्वपक्षयोर्दोषदर्शनादनिर्वचनीयतेति ब्रुवाणस्य किं सदसत्त्वसंशयः किम्बा सदसत्त्वपक्षवहिर्भावाभ्युपगमः। आद्ये भवितव्य सदसत्त्वयोरन्यतरेणेत्येकस्याभासत्वं तच्च सत्त्वपक्षदोषस्यैवाभ्युपेयभावावश्यकत्वात् यदि तावत् सत्त्वपक्ष स्तदा सत्त्वपक्षे दोषः कथं सङ्गच्छते अथासत्त्वपक्ष स्तदा सर्वासत्वे तद्दोषः कथं सद्भावमनुभवितुं प्रभवेत द्वितीयस्तु व्याघातादेवासम्भवी परस्परविरोधे हि न प्रकारान्तर स्थितिरिति तदेतदनाकलितपराभिसन्धे प्रत्यवस्थानम्। यो हि सर्व्वमनिर्वचनीय सदसत्त्वं ब्रूते स कथमनिर्व्वचनीयतासत्वव्यवस्थित्यै पर्य्यनुयुज्यते सापि हि शास्त्रप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव परस्यैव तु व्यवस्थयैवं पर्य्यवस्यति निर्वचनप्रतिक्षेपादनिर्वचनीयत्वं विधिनिषेधयोरेकतरनिरासस्येतरपर्य्यवसायिताया स्तेनाभ्युपेयत्वात्ततः परकीयरीत्येदमुच्यते अनिर्वचनीयत्वं विश्वस्य पर्य्यवस्यतीति। वस्तुतस्तु वयं प्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे चिदात्मनि ब्रह्मतत्वे केवले भरमवलम्ब्य

चरितार्थाः सुखमास्महे ये तु स्वपरिकल्पित-साधनदूषणव्यवस्थया विचारमवतार्य्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमो न साध्वीयम्भवतां विचारव्यवस्था भवत्कल्पितव्यवस्थयैव व्याहतत्वात् । अतएवास्मदुपन्यस्यमानदूषण-स्थितिविषयाः पर्य्यनुयोगा निरवकाशाः त्वद्व्यवस्थाया एव व्याहत्युपन्यासात् नचोपन्यास एव निर्बन्धकरणं विचारोपन्यासस्य सदसत्त्वोपगमौदासीनैर्विचार्य्यमित्यभ्युपेत्यैव परं विचार-प्रवर्त्तनायाः शक्यत्वमित्यावेदितत्वात्। यदि तु विचारस्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्य-मित्युच्यते तदा प्रमाणमव्यापार्य्य न तदीय-सत्त्वाभ्युपगमोपि शक्यते अतिप्रसङ्गादिति वि-चारस्यापि विचार्य्यग्रहणेऽनवस्थया विचारा-रम्भ एवाशक्यः स्यात्। नच पूर्व्वपूर्व्वसिद्धत्वाद्वि-चारे विचारान्तरमिदानीं गवेषणीयमिति वाच्यम् विचारस्य पूर्व्वसिद्धत्वे विचार्य्यरूपस्व-विषयव्यवस्थितत्वात् तस्य विचार्य्यमपि पूर्वपूर्व-मेव विचारितमित्यनारम्भ एव विचारस्य अथ विचार्य्यविशेषस्य पूर्वमसिद्धत्वात्तदर्थं विचारारम्भ

स्तर्हि विचारविशेषस्यापि तद्विषयकस्य पूर्व्वमसिद्धेरेवेति वृथाशुष्कचर्व्वणं यदि च तद्दर्शनरीत्याभिधीयमान मस्माभिर्बाधं विधत्से तदा स्वाभ्युपगमरीतिबाधविधायितैव ते स्यात् अस्माभिर्निर्वाह्यमाणस्य त्वयाखण्डनयुक्त्यैव बाधे अस्माकमेव जैत्रता खण्डनयुक्तयोऽबाधिका निर्वाह्यपक्षस्य बाध्य इत्यस्मदुक्तस्य पक्षस्य त्वयैव निर्व्वाहात् तस्मात् त्वया निर्वाह्यमप्यस्माभिस्तु खण्डनीयमितीदृश्यामेव परं कथायां त्वन्निर्वाह्यनिर्व्वाहेतव जयो नान्यथेति तदेवं भेदप्रपञ्चोऽनिर्वचनीयः ब्रह्मैव तु परं परमार्थसदद्वयमिति स्थितम्।

नचाद्वैते किं प्रमाणं प्रश्नएव तावदयमद्वैतमनङ्गीकुर्व्वतो नोपपद्यते प्रमाणं यन्नाम द्वैते पृच्छ्यते तस्याप्रतीतौ कथमेवम्भूतः प्रश्नः सङ्गच्छते न हि प्रमाणमात्रं भवता पृच्छ्यते किन्नाम विषयविशेषनियतं तच्च तदैवोपपद्यते यदि तादृशं ते प्रतीतिमारोहेत प्रश्नस्य वाग्व्यवहारविशेषत्वात् व्यवहारस्य च स्वजनकज्ञानविषय नियतत्वात् अन्यथा व्यवहाराणां

विषयनियमप्रयोजकस्यान्यस्यासम्भवेन व्यवहारविषयपारिप्लवत्वापत्तेः। यदि चाद्वैतं प्रश्नविषयः प्रतीतमुच्यते तदा तत्प्रतीतिस्ते प्रमा स्यादप्रमा वा । आद्ये यदेव तस्याः प्रमायाः करणं तदेवाद्वैते प्रमाणं तवापि सत्प्रतिपन्नमिति वृथा तस्य प्रश्नः । नच वाच्यं सामान्येनाद्वैतप्रमाणसिद्धौ भूतायामपि विशेषतः प्रमाणे प्रश्नः यतः सामान्यसिद्धावेवाद्वैतसिद्धौ विशेषाय विचारः काकदन्तविचारवत् स्यात् सामान्यसिद्धिरेव विशेषमाक्षिप्यानयन्ती विशेषमपि ते कथितवतीति किमन्यत्प्रश्नेन परिगणितेषु हि प्रमाणप्रकारेषु सर्व्वेषु मध्ये यत्रैव दोषं न प्रमिणोषि तत्रैव विशेषे सामान्यस्य विश्रान्तेः। यदि च परिचितचरेषु प्रमाणप्रकारेषु सर्व्वेष्वेव दोषं प्रमिणोषि तदा प्रकारान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव यदि च का प्रमाणव्यक्तिरसाविति प्रश्नार्थः परिभाष्यते तदा सर्वा व्यक्ति विशेषतो न निर्द्देष्टुं शक्यत इति तदनिर्द्देशेऽपि न नः किञ्चिदपचीयते । यदि च द्वितीयस्तदानीमद्वैतप्रतीतिमप्रमाममन्यमानस्य तव

अप्रमाविषये किं प्रमाणमिति कथं न प्रश्नो व्याहन्यते। अथ अप्रमा सा मम मते तव तु मते प्रमैवेति तत्करणं प्रमाणं पृच्छ्यसे इति ब्रूषे नैतदभ्युपपद्यते तवाद्वैते यत् ज्ञानमुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र ममानियमात्। यदि नाम मया अद्वैतमभ्युपेयते तावता किन्तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात् वस्तुतो वह्निमत्यपि पर्व्वते यदि कश्चिद्वाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोति तावता वाष्पविषयं धूमज्ञानं तत्करणं प्रमाणमेष्टव्यमिति। अस्तु वा प्रश्नोऽयं यथा तथा श्रुतिरद्वैते प्रमाणमिति ब्रूमः श्रूयते खल्वेकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेत्यादि श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यञ्चेश्वराभिसन्धौ प्रसाधयिष्यते सिद्धार्थानां श्रुतीनामन्यपरत्वमपि यदि स्यात् तथापि पदसमन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामनन्यपरीभवनात्। धियः स्वतः प्रामाण्यस्य बाधकैकापोद्यत्वात्। ननु नाद्वैतश्रुतीनामुक्तार्थे प्रामाण्यं भवति प्रत्यक्षादिबाधात् ततस्तान्यत्वैव

क्वचित्सात्यर्थ्यं कल्प्यम्। मैवम्। यदद्वैतश्रुते बोधकं प्रत्यक्षादि मन्यसे तदात्मीये विषये घटपटादेर्भेदे नियत एवोत्पद्येत नतु प्रत्यक्षादिकं भूतभाविवर्त्तमानसकलव्यक्तिभेदग्राहि जायमानमावयोः सम्प्रतिपन्नमस्ति तादृशेन च ज्ञानेनोत्पद्यमानेन सार्वज्ञं तदा तव श्रद्दध्याम् यदि जानासि मम चेतसि किं वर्त्तत इति। यदि च प्रत्यक्षादि किञ्चिन्मात्रविषयं तदा तद्विषयादन्यत्रापि प्रवर्त्तमाना नाद्वैतश्रुतिस्तेन बाधितुं शक्यते स्वविषयमात्रे प्रमयाविपरीतविषयज्ञानबाधनात् अन्यथातिप्रसङ्गात्। माभूदग्नीषोमीयपश्वालम्भनविधिना सर्व्वभूताहिंसाश्रुतेर्न्नैरर्थ्यं यदा चैवं तदा बाधिकाया धियो बाध्याया स्वाद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं बोधयतीति प्रत्यक्षादि कथं स्वात्मानमेव बाधेत घटेन पटेन तद्भेदेनच स्वविषयेण सह तस्याएव धियः स्तुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं नाभेदे प्रामाण्यमासादयितव्यं तत्राबाध्यमानत्वात् नहि तस्याधियः स्वात्मा वा स्वात्मना वा सह घटपटादेर्भेदोपि

विषयः घटपटौ भिन्नावित्येवमाकारा हि सा जायते नत्वहं घटात् पटाच्च भिन्नः मत्तो वा तौ भिन्नाविति। स्वप्रकाशतापि स्वभावे साक्षिणी नतु यतो यतः प्रकाशोभिद्यते ततस्ततस्तस्य भेदेऽपि अन्यथा तत्तदपि प्रकाशकृत्तौ निक्षिपन्तो न कथमद्वैतएव पर्य्यवस्यति। नच तया धिया स्वस्य स्वविषयस्य च स्वरूपावगाहने स्वरूपलक्षणो भेदः प्रकाशितएव स्यादिति वाच्यं पुरोवर्त्ति रजतमिति भ्रान्तौ पुरोवर्त्यात्मनो रजतात्मनश्च स्वरूपप्रकाशे भेदग्रहापत्तेः धर्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोपि तथा स्यादिति सैव धीर्न तत्प्रकाशः तस्मिन् सन्निकर्षाद्यपेक्षायां धियः प्राक्तदसम्भवात्। आत्मवदात्मधर्ममपि सन्निकर्षानपेक्षा सेति चेन्न ग्रहणत्वस्मृतित्वप्रमात्वादावपि तथैव स्यादिति तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यवस्थाप्यमाना कथमात्मनः स्वस्मादेव भेदे प्रमाणीभवितुं प्रभवतीति बाधिकायां बुद्धौ घटपटयोर्भेदप्रमात्वाभावावगमादगत्या श्रुतिस्तत्र तत्प्रतिद्वन्द्वितया। असङ्कुचितस्वतःप्रामाण्यबल-

लब्धतत्तदर्थैक्यान्यथानुपपत्ति सहायसम्पदजेया तयोरप्यभेदं बोधयन्ती न प्रतिहन्तुं शक्येति न क्वचिदपि प्रतिहतप्रसरा सती सर्व्वाद्वैत-प्रमापिकेति। भेदप्रमान्यथानुपपत्त्या च वैप-रीत्यचमशक्यम्। तत्राद्वैतश्रुत्या सन्दिह्यमा-नस्य प्रमात्वस्यैवासिद्धेः भेदधीयमानस्य च द्वि-चन्द्रादिज्ञानवदन्यथाप्युपपत्तेः एकमित्युपादाय यदेवकारमप्युपादत्ते श्रुतिरेकमेवेदमिति सूपा तदैकान्तिकमैक्यं बोधयतीति भेदाभेदे-नाप्यशक्यसमर्थनं घटपटादिभेदग्राहि प्रत्य-चादिप्रामाण्यमिति वुद्धेर्ब्बिरख्य व्यापाराभावात् कथमित्थमिति चेन्न श्रुतितोद्रागेव जातायाः सर्व्वविषया या अद्वैतधियोऽस्मद्बुद्धय एवंविध-विचारसोपानपरम्परामारोहन्त्यो नानाविष-येषु तत्प्रामाण्यविषयाः क्रमेण परिनितिष्ठन्ती-त्यच्यमानत्वात्। ननु यदि नाम प्रत्यचव्यक्त्या तया घटपटभेदोल्लेखिन्या स्वात्मना सह घट-पटयोर्भेदो न गोचरीक्रियते तावतैव कथं तस्याः स्वविषयेन सहाद्वैते श्रुतिः प्रामाण्य-मासादयितुमीष्टे वुद्ध्यन्तरेण तया सार्द्धं घट-

पटयोरपि भेदमुल्लिखता तत्राद्वैतश्रुतेर्बाधा- देव। मैवं तर्हि तस्या अपि विषयमापाततः परित्यज्य ययैवा परया बुद्ध्या घटपटभेदबुद्धे- र्घटात्पटाच्च भेदो विषयीक्रियते तस्याः स्वविष- येण सहा भेदेऽद्वैतश्रुतिः प्रामाण्यमवलम्ब्य लब्धपदा घटपटतद्भेदबुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्य्यवस्यन्ती सर्वेषामेवं तेषामभेदे विश्राम्यति। एवञ्च सति यत्रैव गत्वा बाध- बुद्धिपरम्पराविच्छेदो विषयान्तरसञ्चारोच्छेद- भयादनवस्थाभयाच्चाभ्युपेयः तस्यामेव बुद्धौ पद- मारोप्याद्वैत श्रुतिः सर्व्वं तत्तद्विषयविषयि- प्रवाहमद्वैते स्थापयन्ती न केनापि प्रमाणेन क्वचिदपि बाधितुं शक्या तस्मात् "सुदूरधावन- श्रान्ता बाधबुद्धिपरम्परा। निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहै र्विजीयते।,, नच यत्र तस्य प्रति- पत्तुर्बुद्धिधाराविश्रान्ति स्तत्र पुरुषान्तरबुद्धिभेदे प्रमाणं स्यात् तथापि पुरुषान्तरेण भिन्नतया प्रमीयते सेत्यत्र प्रमाणं त्वया वाच्यं नहि तदपि पुरुषान्तरेणैव नच समाख्यमेवं स्रौतेन निश्च- येन तन्निवर्त्तनात्तथाप्यनवस्थानादिति। अथ

न्रूषे यदा कियद्दूरं बुद्धिपरम्परया सा बाधिता भवत्यद्वैतश्रुति स्तदा तन्न्यायाद् यापि बुद्धिः शेषं गत्वा नानुव्यवसास्यते तत्रापि तद्बाधा गम्यते यत्र सा बाध्यते तत्तुल्यन्यायत्वादन्तिमबुद्धेरपीति। मैवम्। किञ्चियतीषु बुद्धिषु व्याप्यव्यापककोटिमवलम्ब्य व्याप्तिग्रहरूपयैव धिया शेषबुद्धौ बाधनं व्युत्पादयसि त्वमद्वैतश्रुतेः किम्बा बुद्ध्यान्तरदृष्टव्याप्तिसनाथया पक्षधर्मे हेतुमुल्लिखन्त्या बुद्ध्यान्तिमबुद्धिविषयया। नाद्यः। व्याप्तिबुद्धिर्यदि विशेषेपि स्वातन्त्र्येण बाधात्मिकोपेयते तदा सैव विशेषबुद्धिरपि स्यादिति गतमनुमानकथया। अथैवमनुमिति मभ्युपैषि तदा सा नात्मानमपि पक्षीकृत्य प्रवर्त्तत इति तत्रैव दत्तपदा सर्व्वामद्वैतश्रुतिपरम्परामालम्बत इत्युक्तमावर्त्तते। अथ सर्व्वा विवादाध्यासिता बुद्धयः स्वविषयेभ्योभिन्ना बुद्धित्वात् घटपटबुद्धिवदिति सामान्याकारेणात्मानमपि धर्मीकृत्यात्मनोपि स्वविषयाद्भेदं साधयिष्यत्यनुमेति मन्यसे। मैवम्। एवमपि विषयितो विषयस्याभेदं बोधयन्त्यो श्रुतिरनुमान-

मप्यनवकाशयति। विषयिस्वविषयोर्मिथोभेदे-ऽपि साध्ये अस्तु हेत्वनुयोगः परबुद्धीस्तद्विष-यांश्च प्रति निराबाधा सती श्रुतिरेकस्याबुद्धे-र्विषयादपरामपरस्याश्च परामभेदबोधाय धा-वन्ती सर्वाद्वैतएव पर्य्यवस्यतीति। नच शक्य-मनुमातुं सर्व्वस्याबुद्धे र्विषयात् सर्वा बुद्धिर्भि-न्नेति नाभूदन्यबुद्धिविषयादात्मनोपि बुद्धिर्भि-न्नेति नचात्मव्यतिरिक्तादित्युक्तोऽपि निस्तारः स्यात् अद्वैतवादिनः सर्वाभेदमिच्छतः क्वचि-दपि तदसिद्धा विशेषणाप्रसिद्धेरिति एतेन सर्व्वं भिन्नमिति वाक्येन विना बाधं स्वतःप्रमा णेन सप्रतिशब्दा सेयमद्वैतश्रुतिरित्यप्यनव-काशं प्रत्यवस्थानं मन्तव्यम्। यस्मात् कस्मा-दपि भेदे मिथ्यातः सत्यभेदोपगमेन सिद्धसा-धनात् सर्व्वस्मादिति स्वस्मादप्यापत्तेः। स्वव्यति-रिक्तादिति चाद्वैतवादिन्यव्यवच्छेदकं तदेवं "हेत्वाद्यभावसार्व्वत्ते सर्व्वं पक्षतया स्थितम्। किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः।" अतएव च "आद्यधीवेद्यभेदोयाप्यन्यथानुप-पन्नता। स्वज्ञानापेक्षणादन्ते बाधते नाद्वय-

श्रुतिम्।,, नच संस्काराऽरूढ़ढ़दृढ़ान्वयव्यतिरेकान्वय व्यतिरेकोऽद्वयप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्कः अतः "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि। अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम्। असंसर्गाग्रहस्यापि मता प्रांसत्यबाधिते। अत्यन्तासदसंसर्गाग्रहं संसर्गलक्षकम्। अनौचित्या हि तर्केण दुर्बाधैवाद्वयश्रुतिः। अनारोपितमूलत्वाद्बलाहं युरताटशा। प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते तत्रानौचित्यसाम्राज्यं वैपरीत्याच्च नात्र तत्।,, ननु यद्यद्वैतादाह्रियते त्वया नेतरोऽस्य भेदोगृहीत इति ततोऽस्याद्वैताम्नायेरभेदबोधनेन तद्द्वारा सर्वाभेदे पर्य्यवसातव्यमिति। ततस्ततस्तस्य भेदस्तदैव गृह्यते मया तस्मादुदाह्रियमाणतायामनुदाह्रियमाणतायान्न कस्यचिदेतत् प्रत्यवस्थानमस्थाने इति। मैवम्। अन्तिमबुद्धेरद्वैत श्रुतिजबुद्ध्यादितोभेदो न त्वया प्रमित इति मयोच्यमाने यस्तदीय स्ततोभेदस्त्वया प्रमातव्यः स न तावत् प्रत्यक्षेण तत्कालमन्तिमबुद्धे-

रनुपस्थितेः। यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात्तदानीमद्वैतवादिनं प्रति हेतोः साध्याद्यविशिष्टतयानुपपत्तेः येन विना सा तदविशिष्टतया न ततः कथमाभासात्प्रमोदयः स्यात्। नच वाच्यं स्वयं मया स भेदो ज्ञेय इति नास्ति पाक्षिकोपि मां प्रत्यसिद्ध्यादिरिति। यतोस्य त्वद्वचनस्य वैयर्थ्यापत्तिः स्यात् वचनस्य परार्थत्वात् मौनमवलम्ब्यावतिष्ठमानञ्च भवानप्रतिभातो न मुच्यते। नच स्वयं प्रमितोभेदः परं प्रति वचसा केवलं बोध्यत इति वाच्यं त्वद्वचसि परस्याप्रत्ययात्। विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तदर्थे तज्जिज्ञासोत्पादनद्वारेण स्वतस्तस्य तदर्थप्रतिमुत्पादनपर्य्यवसायितयोपयुक्तम्। नचाद्वैतवादिनं प्रति तथा कर्त्तुं शक्यते तं प्रत्यन्यथासिद्धेरुक्तत्वात्। नच वाच्यं मम वचनात् सन्देहेनापि स्पृत्या तत्र तत्र सन्दिग्धबाधितभावया नाभेदप्रतिपादनं ते घटत इति यस्मादद्वैतं मन्यमानेत भेदासिद्ध्या सर्व्वत्र साध्याविशेषादिदोष प्रतिसन्धायिना संशय-

स्याप्यनवकाशीकरणमेव स्यात् तस्मात् "एकं ब्रह्मास्त्रमादायनाद्यं गणयतः क्वचित्। आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ।,, अपि च प्रतीयते तावदिदं सामान्यतो यन्नाम किञ्चिन्नरश्चेतसा चिन्तयन्नस्तीति किञ्चिद्वा विवक्षुरित्यादि तत्र परस्य बुद्धिविषयो विवक्षादिविषयो वा 'यो विशेषतो विनिगमनं विनैव न प्रतीयते ततोऽन्लिमबुद्ध्यादिभेदो न भवता शक्यप्रमः परेण तच्चिन्तनादेरपि सम्भवात् स्वस्मात् स्वस्य भेदाभावात् ततस्तत्र लब्धपदा कथमद्वैतश्रुतिर्विश्वाभेदे पर्य्यवस्यन्तीत्वया शक्यबाधा स्यात्। तस्मात् "नैव सामान्यतोज्ञाते नैव ज्ञाते विशेषतः। पदरोधस्त्वया कर्त्तुं शक्यः स्यादद्वयश्रुतेः ।,, ननु भेदमनङ्गीकुर्वतो भवतः कथं तत्तत्पदपदार्थवैचित्री व्यवहारो न व्याहन्यते कथं व्याहन्यते प्रति वच्यते हि तत्। किञ्च योऽयं त्वया व्याघात आपादनीयः सोपि कस्माच्चिदापादकात्। नचापाद्यापादकमभिद्यमानमापत्तेर प्रभवेदिति। तस्मात् "नानात्व-

मवतस्यापि वदत्यद्वैतवादिनि। असिद्धभेदात् व्याघातः पतेदापादकात् कुतः।

इदमपि विचारमर्हति यदद्वैतश्रुतीनां बाधकमुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि तदपि कीदृश्यर्थे पर्य्यवस्यतु। तथाहि प्रत्यक्षेण योऽसौ भेदो गृह्यते स किं स्वरूपभेदः किमन्योन्याभावः किं वैधर्म्यम् अन्यदेव वा। यदि तावत्स्वरूपभेदः स नाम घटपटयोर्हि स्वरूपं यत्परस्परस्माद्भेद स्तत्परस्परमनन्तर्भाव्य न सम्भवति भेदो हि भवन् कस्मादपि भवति। अन्यथा स्वरूप भेद इति पारिभाषिकं नाम स्यात्। यदा च घटाद्भेदः पटस्येत्येतावानेवार्थः पटादेः स्वरूपं प्रत्यक्षेण गृह्यते तदा घटोऽपि पटात्मन्येव प्रविष्ट इति घटपटयोरैकात्म्यमेव भेदग्राहिणा प्रत्यक्षेणावगाहितमिति विपरीतमापद्यते। ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते तथा भेदोल्लेखेपि दीयतामस्यां दृष्टिरभेदे हि घट इत्येव पट इत्येव वा बुद्धिः स्यात् न तु घटाद्भिन्नः पट इति चेत् स्यादप्येष पर्य्यनुयोगः यद्यविद्यमान भावभेदं

पारमार्थिकमभेदमिच्छन्तोपि प्रत्यादिशामः। तस्मात् "अभेदेनोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा। तथाचाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्षवैशसात्।" अथ भेद इत्येतावन्मात्रं पटस्य स्वरूपं घटादिति तद्घटेन प्रतियोगिनान्येनैव निरूप्यते तदपि नोपपद्यते निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात् नित्यं प्रतियोगिघटित एव तस्मिन् प्रमाणप्रसरात्। का चेयं वाचोयुक्तिः यदन्यासमाकाङ्क्षं पटस्य स्वरूपमन्येन निरूप्यमाणं ततोभेदोभवतीति। नहि यत् स्वरूपेणैव नीलं तत्पीतेन निरूप्यमाणं सत् नीलं भवतीति यदपि चोक्तं प्रतियोगिना घटेन निरूप्यमाणं पटस्य स्वरूपं भेद इति तत्रापि पटं प्रति प्रतियोगित्वं घटस्य किं स्वरूपं किं वा धर्म्मः कश्चित् यदि प्रथमस्तदा पटं प्रति प्रतियोगित्वमित्येतावानेवार्थोघटस्य स्वरूपं भवदात्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वैतमेव पर्य्यवस्यति तत्रापि यदि प्रतियोगित्वमात्रं घटस्यात्मा पटं प्रतीति च घटापेक्षित्वमन्यदेव तदप्यनुपपन्नम् अकिञ्चिदपेक्षस्य प्रति-

योगित्वस्य प्रमाणाविषयत्वात् पटं प्रतीत्यत्रापि च स्वरूपतदन्यविकल्पे दोषएव। नापि द्वितीयः योसौ धर्मः पटं प्रति प्रतियोगित्वं तस्यात्मनि पटोपि प्रविशतीति तेन सह पटस्याद्वैतं स्यात् यदा च पटो घटस्य धर्मतामापन्न स्तदा घटोपि पटधर्मतामनेनैव न्यायेन गच्छेत् न हि पटेन प्रतियोगिना निरूप्यमाणत्वे घटस्यान्या गतिरस्तीति परस्परमाश्रितत्वमाश्रयत्वञ्च स्यात्। नच कस्यचित्प्रमाणस्य विषयो घटारूढः पटस्तत्पटारूढश्च स एव घट इति। किञ्च धर्मस्य तस्य धर्मिणा सममसम्बन्धेऽतिप्रसङ्गः। सम्बन्धानन्त्येऽनवस्था प्रथममन्ततो वा गत्वा स्वभावसम्बन्धोपगमे सम्बन्ध्यन्तरस्यापि तत्स्वभावप्रवेशादभेद एव पर्य्यवसानं स्यादिति एवमन्यस्मिन्नपि धर्मविकल्प इति तस्मात्स्वरूपभेदे प्रमाणाभवत् प्रत्यक्षमद्वैतएव प्रमाणं भवति। ननु घटादिकमेव यदान्यानपेक्षं वोच्यते तदा घटादिकमित्येव प्रतीयते यदा पुनः पटादिना निरूप्यते तदा ततोभेद इति प्रतीयते। मैवम्। घटादिकमित्येवम्भूतप्रतीते

स्तावद्भेदप्रतीतिर्लक्षणा सा च न घटादिमात्रेण विषयेणान्याकारा भवितुमर्हति तेन पटादिकमधिकं तदा प्रकाशत इति विशेषः स्यात् घटपटविषयप्रतीतितोपि वैलक्षण्यात् । न हि घटः पटश्चेति घटात्पटोभिन्न इति प्रतीत्योरेकार्थत्वं कश्चित्प्रत्येति तत् कस्य हेतोः, पञ्चम्या प्रथमया च वैकल्पिकनिर्देशमसहमानयैव प्रतीतिकलहनिरासात् न हि घटः पटश्चेति प्रत्येतव्ये कश्चिद्घटात्पट इति प्रत्येति तस्मात् घटस्य न स्वरूपनिरूपणे पटप्रतीत्यपेक्षा । नच यत्प्रतीति र्यत्प्रतीतेः कारणं स्यात् तत्र तस्याः कारणभूतायाः प्रतीतेर्योऽर्थस्तस्मादयमिति कृत्वा कार्य्यभूतायाः प्रतीतेरर्थः प्रतीयते माभून्निर्व्विकल्पार्थोदेव सविकल्पकार्थस्य प्रतीतिः सा च सादृश्यादेरेवं स्मर्य्यमाणादिः स्यात् तस्मात्पटोघटाद्भिन्न इत्याद्याकारेण पटादेर्भेद एव भेदावधिभूत घटादिसङ्घटितः स्फुटं सर्व्वलोकसाक्षिकः प्रतीयमानो नैकप्रतीतेरन्य प्रतीत्यपेक्षामात्रेण समर्थयितुं शक्यः अतिप्रसङ्गादिति । अतएवान्योन्याभावभेद-

मवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निरस्तम् अन्योन्याभावोपि हि यस्माद्भेदएष्टव्य स्तमात्मन्येवान्तर्भावयेदुक्ता युक्तिभिः। किञ्च घटपटयोस्तत्तदन्ययोश्च तादात्म्यमन्योन्याभावस्य प्रतियोगि मन्तव्यं तद्यदि सर्व्वथा नेष्यते तदा तद्विशिष्टस्तदुपलक्षितो वान्योन्याभावोपि न प्रमाणेन प्रत्येतुं शक्यः। न हि शशविषाण-विशिष्टस्तदुपलक्षितो वा कश्चित्प्रामाणिको भवितुमर्हति तत्कस्य हेतोः तस्मिन्विशिष्टरूपेऽर्थे तादृशि चोपलक्षणव्यवच्छिद्यमानात्मनि प्रमाणं निविशमानं विशेषणमपि तदीयं तदुपलक्षणमपि वा नानुल्लिख्य द्भवितुं प्रभवति तस्मिंश्चात्यन्तमसत्येवालम्बने न तत्प्रामाण्यं शक्य-समर्थनम्। नच वाच्यं पटप्रतियोगिको घट-माश्रितोऽसावभावोऽभ्युपगम्यमान एको घट-प्रतियोगिकः पटमाश्रितश्चापरोनात्यक्तासत्-प्रतियोगितादोषमारोच्यतीति। तथा सति संसर्गाभावादन्योन्याभावस्य कोविशेषः स्यात् तर्हि यथा घटाभावस्य पटसंसर्गवति घटसंसर्गा-भावं पटे समर्थयसे तथा घटाभावः पटात्मक

इति तत्तादात्म्याभावं पटस्य स्वीकरिष्यसि तस्मात्तादात्म्यं संसर्गञ्च प्रतियोगि कोटावन्त-र्भाव्यान्योन्याभाव संसर्गाभावयोर्वैलक्षण्यमुपेयं तथा सति चात्यन्तासत्प्रतियोगिता दुर्व्वारा। नच वाच्यं घटे पटत्वं नास्ति पटे च घटत्वं नास्तीत्येतावन्मात्रपर्य्यवसितैवान्योन्याभाव व्यव-स्थामन्तव्येति यतस्तथा सति घटत्वे पटत्वे च न कश्चित्ताद्दृशोधर्मोऽभ्युपगम्यते योऽन्योन्यस्मि-न्निषेद्धुं योग्य इति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वं पटे च घटत्वं निषेधात्प्रमाणं घटत्व-पटत्वशून्यद्वयमप्यावेदयतीति वैधर्म्यस्य स्वरूप-भेदस्य चासम्भवेन किं प्रतियोगि किञ्चाल-म्बनं विधाय घटपटान्योन्याभावोपि प्रमाण-पथमवतरेदिति अतएव न वैधर्म्यमपि भेद-मावेदयत्प्रत्यक्षमद्वैतबाधकमुपपद्यते वैधर्म्ये हि घटत्व पटत्वादौ वैधर्म्यमन्यदस्तीत्युपगमे वैधर्म्यविश्रान्त्यनवस्थयोरैक्यमननुभवञ्च कथं प्रत्यु-त्तरणीयः। वैधर्म्य च वैधर्म्या स्वीकारे वैधर्म-योरैक्यापत्त्या कथमात्माश्रयभेदत्वेन तयोः पर्य्यवसानं स्यात्। किञ्च ये ते वैधर्म्य भेदौ ते

किं घटादितोभिन्ने धर्म्मिणि निविशेते किमभिन्ने परस्परविरुद्धयोरनयोः पृथग्भूतस्य प्रकारस्यासम्भवात्। आद्ये येन भेदेन भिन्नत्वं वैधर्म्मयोर्भन्तव्यं तत्रापि पर्य्यनुयोग इत्यनवस्थायां पर्य्यवसानं स्यात्। सन्त्वनन्ता एव भेदा इति चेन्न क्रमेण तेषामाश्रयसम्बन्धे सावधिसत्वे वस्तुनि तदन्वयासङ्गतिरेव। अथ जायमानं वस्तु युगपदेव ते भेदाः परिरभन्ते तदा किम्भेद विशेषिते किम्भेदस्थितिरितिविनिगमकविशेषाभावादन्योन्यकलहं तेषां कः समाधातुमीष्टे। चरमचरमस्वीकार्य्येण च भेदेन प्रथम प्रथमस्वीकृतभेदोपयोगसिद्धेरग्रे धावन् पश्चाल्लुप्यमानो विस्मरणशीलस्तवत्स भेदप्रवाहः किमालम्बेत। एवमेवम्विधे विषयेऽन्यत्रापि "प्राग्लोपाविनिगम्यत्वप्रमाणागमैर्भवेत्। अनवस्थितिमास्थातुश्चिकित्स्या विदोषतेति।,, यदि च क्वचिद्गत्वा स्वरूपमेवान्योन्यं व्यावर्त्तमानं भेद इष्यते तदा ययोः स्वरूपं तयैष्टव्यं तयोर्निस्स्वरूपतापत्तिः। अथ न स्वरूपमात्रं मिथोव्यवर्त्तते किन्नाम स्वरूपविशेष इत्युच्यते

तर्हि स्वरूपविशेषमात्रव्यावृत्तया स्वरूपमात्रं तयोः स्यादित्येकत्वापत्तिः। अथ वा वक्तव्यो-ऽसौ स्वरूपमात्रादन्योविशेषार्थः। अथ न स्व-रूपं नाम किञ्चिदनुगतमिष्यते मया किन्तु विशेषरूपासु व्यक्तिष्वेव स्वरूपशब्दोनानार्थः सन्निविशत इत्यभिधत्से तर्हि गतमनेन न्यायेन गोत्वादिसिद्धिप्रत्याशया। न च प्रतिव्यक्तिस्व-रूपपदसमयग्रहोपपत्तिः। यदि च स्वरूपं भेदः स्यात्तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न सन्देहः स्यादिति। यदि चाभिन्ने भेदो निविशेत तदा याप्येका व्यक्तिः प्रमीयते घटादिः सापि तेनैव भेदेन नैका स्यादित्येकाभावे वानेक-मपि न व्यवतिष्ठते। एतेन न भेदावच्छिन्ने नाप्यभेदावच्छिन्ने भेदोनिविशते किन्तूदासीन इत्यपि निरस्तम्। अतएव भेदो नाम स्वरूपा-न्योन्याभाववैधर्म्यानात्मकोधर्मान्तरं पृथक्त्वापर-नामकमित्यपि परास्तं सोपि हि स्वाश्रये भिन्ने निविशेताभिन्ने वेत्यादि यथोक्तदोषलङ्घनाज-ङ्घालएव स्यात्। स्वाश्रयेण च सह स्वस्मिन्नभेद भयाद्यदि स एव भेदोनिविशते तदात्माश्रयः

अन्यस्येत्तस्मिन्नेव तस्मिन्नप्यन्य इत्यनवस्था क्वचि-दपि गत्वा भेदभेदाश्रययोर्भेदास्वीकारे च त-दैक्यद्वारिकामूलपर्य्यन्तमेकता धावेत्। "तदद्वैत श्रुतेस्तावद्बाधः प्रत्यक्षतः स्ततः। नानुमानादि तं कर्त्तुं तत्रापि क्षमते मते। अद्वैतागमनासीरे साधु साधु न्वती परान्। सेवा मेवार्जयत्यर्था-पत्तिपत्ति परम्परा।" नन्वद्वैतश्रुतयो वर्णपद-विभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्त्यः स्वोपजीव्याभिर्भेदबुद्धिभिर्न कथं बाध्यन्ताम् उप-जीवकस्योपजीव्याद्दुर्बलत्वात्। मैवम्। न भे-दस्य सर्व्वथैवासत्त्वमभ्युपगच्छामः। किं नाम न पारमार्थिकं सत्त्वमविद्याविद्यमानत्वन्तु तदीय-मिच्छाम एव तदेव च कार्य्यकारणभावोपयोगि एतेन एकमेवेत्येवकारव्यवच्छेद्येनाद्वितीयमिति द्वितीयेन नेह नानेति नानर्थेन किञ्चनेत्यनेन वस्तुना विना नोपपद्यमानेन व्याघात इत्यपि प्रत्यादिष्टं श्रुतिभिस्त्वाद्वैतार्थाभिः पारमार्थिक-मद्वैतं प्रतिपाद्यते नच पारमार्थिकस्तितर-पारमार्थिकधिया शक्यबाधा मा भूच्छुक्तिरजत-धियः परमार्थ शुक्तिमिति बाधः यत्र त्वनि-

रनुष्णा इति बुद्धेरुष्णाबोधोपजीवनादुष्णाबोधे-
नानुष्णाबुद्धिबाधः तत्र द्वयोरप्यविद्याविद्यमान-
त्वाद्बाधोयुक्तः। ननु तत्रापि तस्यानुष्णता
पारमार्थिक्येव साध्यतामबाधनाय। मैवम्।
अनुष्णताया जलादि दृष्टान्तसजातीयायाः शी-
ताद्यव्यावृत्तस्वरूपायाः प्रसाधनेनाविद्याविद्य-
मानत्वएव विश्रामात् तदीयैवंविधरूपतानङ्गी-
कारे चाद्वैतस्यैव नामान्तरकरणापत्तेः तत-
स्तस्यां ज्ञेयज्ञानादिभेदावस्थाभ्युपेयतया जग
द्वाधयुक्तिकबलाप्रवेशासम्भवात् अद्वैते च द्वैता-
श्रयस्य बाधस्य वास्तवस्यानवकाशादपारमा-
र्थिकत्वसम्भावनापि दूरतएवापसरतीति। ननु
किमद्वैतपरमार्थताभ्युपगमेन समाहितम्भवति
यत उपजीव्यबाधादद्वैते प्रमां श्रुतिर्जनयितुं
न शक्नोतीति ब्रूमः। मैवम्। अद्वैतं हि पार-
मार्थिकमिदं पारमार्थिकभेदेन विरुध्यते नत्व-
विद्याविद्यमानेन तदविद्याव्यवस्थितं भेदं तद्-
बोधञ्चोपजीवन्त्या न परमार्थाद्वैतबुद्धेरुपजीव्य
बाधः। यदि श्रुतिजन्या भवत्यप्यद्वैतबुद्धिर-
विद्याविद्यमाना तथापि तद्विषयस्तावत्परमार्थ-

सदेवाद्वैतं विषयविरोधेन च तस्या बाध्यता सच नास्तीति तस्मात् "पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः। बाधनादुपजीव्येन बिभेति न मनागपि ।,, श्रुतिरप्याह । द्वितीयाद्वै भयं भवतीति तस्माद्वैतं ब्रह्मैवेदं सर्व्वमिति श्रुत्यर्थेन सहैक्यमापन्नं ब्रह्मैव स्यात् विज्ञानमानन्दं ब्रह्मेति श्रुत्या च ज्ञानात्मकतया व्यवतिष्ठते तेन यदिदमद्वैतज्ञानं श्रुत्या जनितं तद्विज्ञानाद्वैतात्मन्येव निविशते। ननु कथं तस्य श्रुत्या जन्यत्वमुपपद्यते सत्यमेवं स्यात् यदि तस्य पारमार्थिकी श्रुत्या जन्यतापि स्यात् अविद्याव्यवस्थिता तु तज्जन्यता न पारमार्थिकेन तदजन्यत्वेन विरुध्यते अतएव श्रुत्येदमेकं साध्यते यत्तव यद्येकता भेदाभावो यदि चैकसंख्या यदि वा ज्ञानात्मत्वं यदि वा अन्य एकत्वनामा कश्चिदभेदापरपर्य्यायो धर्मस्तद्वत्त्वं बोध्यते तस्याद्वैत व्याघातकत्वान्न सोढुं शक्नोति तदा तदपि निष्पीडनमसहमानं ज्ञानश्रुतिजन्यत्वेन सहैव निवर्त्तताम्। यत्तु तादृशस्याद्वैतस्य धर्मस्य धर्मितया प्रमितं तन्मात्रमबाधादधिगतं

परमार्थतोव्यवतिष्ठतां न हि परमार्थशुक्ती-रजततया प्रतीयते यदा तदा बाधात्तत्र रज-तत्वे व्यावर्त्तमाने शुक्तिव्यक्तिरपि तदपराधा-न्निवर्त्तते सेयमद्वैतबुद्धि र्न तर्कमवताय्य प्राज्ञै-रपनेया यदाह श्रुतिः नैषा तर्केण मतिरप-नेयेति। तस्मात् "धीषना बाधना यास्यास्तदा प्रज्ञां प्रयच्छय। चेष्टु चिन्तामणिं पाणिलब्ध-मब्धौ यदीच्छय।,, सेयमद्वैतदृष्टिर्दृष्टार्थापि यदाह स्वल्पमप्यस्य धर्मस्य त्रायते महतोभ-यात्। तस्मात् "ईश्वरानुग्रहादेषा पुंसमद्वैत-वासना। महाभयकृतत्राणा द्वित्राणां यदि जा-यते।,, तस्मात् "आपाततो यदिदमद्वयवादि-नीनामद्वैतमाकलितमर्थतया श्रुतीनाम्। तत् स्वप्रकाशपरमार्थचितैव भूत्वा निष्पीडितादहह निर्व्वहते विचारात्।,, तदिदमेताभिरात्म-मतसिद्धसद्युक्तिलक्षणोपपन्नाभिर्युक्तिभिरुपनी-यमानमद्वैतमविद्याविलास लालसोऽपि श्रद्द-धातुभवान् तदनूचानयैवोपनिषदर्थश्रद्धताध्यात्मं जिज्ञासमानः परमात्मतत्त्वं क्रमाद्वृत्तिव्यावृत्त-चेताः स्वप्रकाशसाक्षिकं साक्षिकरसातिशायि

स्वात्मनैव साक्षात्करिष्यते। यथा च परिहृत-चापल्यमात्मतत्त्वामृतसरसि निमज्य रज्यति निरायासमेव मानसं तथाहमकथयं नैषध-चरितस्य परमपुरुषस्तुतौ सर्ग इत्येषा दिक्।

"अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा। तत्त्वानि तस्माग्र यथाभिलापं सैद्धान्तिकेऽप्यध्वनि योजयध्वम्।"

तदेतादृशेषु सर्व्वास्वपि दर्शनस्थितिषु कामं मास्माकोनाः खण्डनयुक्तयः प्रगल्भन्ते यासामीश्वरपरवशां विश्वव्यवस्थामनास्थाय निरसनमशक्यं तासामयतारणार्थमयं प्राचार्क्कप्रवाटोपन्यासः। तथा हि यदि दर्शनेषु शून्यवादाऽनिर्व्वचनीयपक्षयोराश्रयणं तदा तावदमूषां निराबाधैव सार्व्वपथीनता। यदि तु प्रमाणादिसत्त्वाभ्युपगन्तृमतावलम्बनं तदापि लक्षणखण्डनयुक्तीनां लक्षणविशेषखण्डने लक्ष्यखण्डनयुक्तीनाञ्च तद्विषयप्रमाणविशेषखण्डने प्रत्येकं तात्पर्य्यम्। नच सौत्रादिलक्षणप्रमाणखण्डनेऽपसिद्धान्तापत्तिः तादृश्याः सूत्रादि व्याख्यायाः खण्ड्यमानत्वात्। नच वाच्यं लक्षणविशेषवस्तु

व्यवस्थापक प्रमाणविशेषलक्षणादिव्याख्याविशेष-खण्डनपरत्वेन लक्षणान्तरं प्रमाणान्तरं व्याख्यान्तरञ्च प्रसज्येत भवतोऽपीति वितण्डा-कथामालम्ब्य खण्डनानां वक्तव्यत्वात् तत्र च व्याहत्य स्वपक्षनिर्व्वाहं प्रति पर्य्यनुयोगानव-काशात् एवञ्च सति वादिदर्शनमास्थित्यापि खण्डनप्रयोगो निर्व्वाध एव एकदेशिवत्यत्यव-स्थातुं शक्यत्वात् वैयाकरणानामिव वा शब्द-सिद्धिप्रसङ्गस्य परकीयतत्त्वज्ञाननिरूपणार्थं स-मानपक्षस्थित्यापि पर्य्यनुयोगसांव्यावहारिक-तायाः सम्भवात् वस्तुस्थितिं कुर्व्वाणेन च विचा-रकेणावश्यमेतावुक्तय उद्धरणीयाः अन्यथा वस्तुव्यवस्थितेरशक्यत्वादिति वादेऽपि प्रयोगः सम्भवत्येव खण्डनयुक्तीनाम् जल्पस्त्वेका कथा न सम्भवत्येव सामयिकी वितण्डा द्वयशरीरत्वात् अन्यथा जल्पद्वयेनापि किमित्येका कथा न कल्प्यते अवोचाम च जल्पविचारप्रस्तावे विस्त-रेण तदिति । जल्पकथयापि वाभिधाने स्वपक्षे व्याहत्य सदोषस्यापि प्रमाणतयाभिधानं कृत्वा तदीयोद्भावनकारी काममपि खण्डनयुक्तिमवतार्य्य

बाधनीय इति जल्पेपि नात्यन्तमनवकाशाः खण्डनयुक्तयः।

कीदृश्यः पुनस्ताः। उच्यन्ते। तथा हि लक्षणाधीनतावल्लक्ष्य व्यवस्थितिः लक्षणानिचानुपपन्नानि ज्ञानाधिकरणादिलक्षणनिरूपण द्वारेण चक्रकाद्यापत्तेः तेषु तावत्तत्त्वानुभूतिः प्रमेत्ययुक्तं तत्त्वशब्दार्थस्य निर्व्वक्तुमशक्यत्वात् तस्य भावो हि तत्त्वमुच्यते प्रकृतस्य तच्छब्दार्थः न चात्र प्रकृतं किञ्चिदस्ति यत्तच्छब्देन परामृश्यते अथानुभूत्वा स्वीचीविषय आक्षेपाद् बुद्धिस्थः कार्य्यते स तच्छब्देन परामृश्यते वक्तृश्रोतृबुद्धिस्थतायामेव प्रकरणपदार्थविश्रामात् तेन यस्यार्थस्य यो भावस्तस्य तत्त्वमुच्यते अरजतादेरपि रजताद्यात्मना अनुभूतिविषयतासम्भवादसत्यानुभूत्यव्यवच्छेदात् भवितुरतत्त्वशब्दार्थत्वप्रसङ्गेन च धर्म्यंशे विशिष्टे च प्रमाया अप्रमात्वापातात् अथोच्यते अवयवार्थचिन्तया रूपणाभिधानमिदं त्यज्यतां यतोयं तत्त्वशब्दः स्वरूपमात्रवचन इति एतदप्ययुक्तं स्वरूपत्वस्य जातेरुपाधेर्वा स्वात्मनि दृत्तप्रदृत्तिभ्यामनुपपत्तेः

स्वरूपशब्दार्थस्यैकस्यासम्भवेन प्रतिविषय व्यावृत्त्या लक्षणस्याव्यापकत्वापातात्। कथञ्च तत्त्वेति विपर्य्यासादेर्निरासः तथा हि शुक्तौ यो रजतमिति प्रत्ययः सोपि स्वरूपबुद्धिर्भवत्येव न हि धर्मी वा रजतत्वं वा न स्वरूपं नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपमिति युक्तं समवायो हि तयोः सम्बन्धः सच स्वरूपमेव सत्यं समवायास्वरूपं स एव तु शुक्तिव्यक्तौ रजतत्वस्य नास्तीति चेत्। मैवम्। तव नास्तित्वेपि स्वरूपताया अव्यावृत्तेः न हि गृहे देवदत्तो नास्तीति स्वरूप न स्यात् न स्वरूपमात्रं तत्त्वमुच्यते किन्तु यद्देशकालसम्बन्धि यत्स्वरूपं प्रतीतं तस्य तद्देशकालसम्बन्धस्वरूपं तत्त्वमुच्यत इति चेत्। मैवम्। देशकालसम्बन्धांशे प्रमायाः अप्रमात्वापातात् तयोः स्वरूपमेव तत्त्वशब्दार्थ इति चेन्न तत्त्वपदस्यानेकार्थत्वे लक्षणाव्यापकत्वापत्तेः। अथैवं ब्रूषे यद्यथाभूतं प्रतीयते तत्तथा परमार्थतो व्यवस्थितं तत्त्वमुच्यते। नैतदपि युक्तं यद्यथाभूतं प्रतीयते। तद्यदि प्रतीतिसमयमपहाय कालान्तरे तथा न

भूतं स्यात्तदाप्येवं तत्त्वं स्यादेवेति भाविपाकज-राग: कुम्भ: श्यामदशायामपि रक्तपित्तिना रक्ततयोपलभ्यमान स्तत्त्वं स्यादिति तदबुद्धे: प्रमात्वापात:। यदा तदेति विशेषणप्रक्षेपेण च कालविशिष्टताप्रतीतेरप्रमात्वापात:। नहि कालवैशिष्ट्येपि कालान्तरसम्बन्ध: सम्भवी। अन्योपाध्यवच्छिन्न: सोऽन्योपाध्यवच्छिन्नेन सम्भवत्यतीति चेत् तर्हि दण्ड्यपि देवदत्त: कुण्डलिनं स्वमारोच्यत्येव उपाधिभेदेष्युपाधेय-स्यैकत्वानिवृत्तेर्नैवमिति चेत् तुल्यम्। एतेन कारणं तत्त्वमित्यपि निरस्तम्। सर्व्वस्य तथात्वे प्रमित्यभावेनात्माश्रयेण च प्रतिक्षणविशिष्टवि-स्यावश्यककारणत्वोपगमदुरपवादत्वादर्थक्रिया कारित्वस्वरूपसत्त्वलक्षणाङ्गीकारि जैनचरण-शरणप्रवेशविडम्बनादिदोषग्रासेन चेति। किं चेदमनुभूतित्वं नाम ज्ञानत्वावान्तरजातिभेदो वा स्मृतिव्यतिरिक्तज्ञानत्वं नाम जातिरेका-भ्युपगम्येति कुत: अनुभवामीति प्रत्ययानुगम-बलादिति चेन्न माघमासीयनिशावसाने सिता-सितसरित्सम्भेदस्नायिन: सत्यपि शब्दबलाद्-

भावि स्वकीयस्वर्गसुखसम्पत्तये सुखमनुभवामीति प्रतीत्यनुदयात् प्रत्युत शीतसम्भूतवेदनासम्वेदनादेवापरस्त्वियञ्च सम्यग्ज्ञानस्यास्तिककामुकस्य शब्दाधीने सत्यपि भाविनरकगमनानुभवनीययातनाधिगमे दुःखमनुभवामीति मतेरनुत्पत्तेःप्रत्युतानन्दमानन्दं सम्बिदन् मात्मतमस्मीति प्रत्ययात्। यदि तु शब्दोपदर्शितव्याप्तिजमनुमानमनुभवएव स्यात् तर्हि सुखं दुःखं वानुभवामीति तयोः प्रत्ययः स्यात्। अथ मन्यसे साक्षात्कारमनुभवमनुरुध्य तयो नैवमधिगमव्यवहारौ शब्दजानुमानापेक्षौ तु विमर्शकस्य स्यातामेव ताविति तर्हि साक्षात्कारिणि ज्ञानेऽनुभवप्रत्ययव्यवहारौ साक्षात्त्वनिबन्धनाविति तत्रानुभवत्वजातिकल्पनायां न प्रयोजनप्रमाणे इत्यनुभूत्यर्थभेदाल्लक्षणानुगमो दोषः। अथ स्मृतिव्यावृत्तेन रूपेण यः प्रत्यक्षादिष्वनुभव इत्यनुगतावगमः स साक्षात्कारित्वादनुपपन्नः। ततश्च साक्षात्कार्य्यसाक्षात्कारिज्ञानविशेषसाधारणमनुभूतित्वमन्यदेष्टव्यमित्युच्यते तदपि न युक्तं पदार्थान्तरव्यावृत्तेन

रूपेण यस्तदितरेष्वनुगतप्रत्ययः शब्दव्यवहारो वा तत्र तदेव रूपं निमित्तं न तु जातिः काचित्तदनुरोधात्कल्प्यते। तथा सत्यलक्ष्यपदार्थेभ्यो घटादिभ्यो व्यावृत्तेन रूपेण विभीतकादिषु साध्यावगमादनुगता जातिः कल्प्या प्रसज्यते इतोपि नानुभूतित्वं नाम स्मृतिव्यावृत्ता जातिः। तथा हि स एवायमिति तावत्प्रत्यभिज्ञा जायते सा किं स्मृत्यनुभवरूपं ज्ञानद्वयम् एकमेव वा विज्ञानमंशे स्मृतिरंशे चानुभवः उत स्मृतिरेव। आद्ये अनुभव एव ग्राह्ये य एव प्रत्यभिज्ञायां प्रागवस्थाविशिष्टादिदन्ताविशिष्टस्याभेदः प्रकाशते स स्मृतावन्तर्भावयितुमशक्यः अननुभूतचरत्वेन संस्कारानुपनेयत्वात्। अतएव न तृतीयोपि नाप्यनुभवेऽन्तर्भावयितुमसौ शक्यः प्रत्यभिज्ञानमात्रेऽनुभवेन प्रागवस्थाया असम्भेदनात्। सम्वेदने चानुभव एवेति शेषपक्षेऽन्तर्भावः स्यात्। स चाग्रे दूषयिष्यते अतएव न द्वितीयः प्रागवस्थाविशिष्टाभिन्नत्वांशेऽनुभवस्वीकारश्च त्प्रागवस्थावैशिष्ट्यमप्यनुभवविषय एव निविष्टमिति चरमपक्षप्रवेशः। अथ

प्रागवस्थाविशिष्टादभिन्न इत्ययमर्थोऽनेकांशस्तत्र प्रागवस्थाविशिष्ट इत्यंशे स्मृतित्वमभिन्न इत्यंशे चानुभवत्वमित्युच्यते। एवं तर्हि प्रागवस्थाविशिष्टः स इदन्ताविशिष्टोऽभिन्नोऽयमिति स्मृत्यनुभूतिभ्यामावेदितम्भवति। प्रागवस्थाविशिष्टाश्रयतयात्वभेदः केनापि न प्रकाशित इति य एव प्रागवस्थाविशिष्टः स एवायमिति प्रत्यभिज्ञायाः शरीरं न स्यात्। अथानुभवेन योऽसावनुभूयमान धर्म्माश्रयतयाऽभेदोबोधितः स कोट्यन्तरमनालम्ब्य न पर्य्यवस्यतीति केनचित् खलु कस्यचिदभेदो भवति। स च स्मृत्यंशोपनीतमेव सन्निधानात्कोट्यन्तरं प्रागवस्थाविशिष्टरूपमालम्बत इत्यभेदस्य प्रागवस्थाविशिष्टाश्रयतासिद्धिरिति। तदेतत्तुच्छतरम्। कोट्यन्तरमालम्बत इति किं कोट्यन्तराश्रितो भवति कोटान्तराश्रिततया ज्ञायत इति। आद्ये अभेदस्येदानीं प्रागवस्थाविशिष्टधर्म्माश्रयणोत्पत्तौ। पूर्वं प्रागवस्थाविशिष्टेदन्ताविशिष्टयोर्भेदः स्यात् द्वितीये तु यदैव कोट्यन्तराश्रिततया इदन्तावच्छिन्नधर्म्यभेदस्य ज्ञानं तत्स्मृतौ नान्त-

भावयितुं शक्यं नाप्यनुभवांश इत्युक्त एव दोषः किञ्च यदा प्रत्यभिज्ञानं स इत्यंशे स्मृतिरयमित्यंशे चानुभव इत्येकं ज्ञानमभ्युपेयते तदा धर्मिणमादायापि स्मृत्यनुभवसङ्करो दुर्वारः तथा हि संस्कारेण तत्तामात्रं चोपनीयते तत्ताविशिष्टो वा धर्मी । आद्ये स इति प्रत्यभिज्ञायाः शरीरं न स्यात् तत्तायाः केवलायाः संस्कारेणोपनीतत्वात् । नापि द्वितीयः तथा सत्ययमित्यनुभवांशे धर्मिप्रकाशो वक्तव्य एव अन्यथा इदन्तामात्रप्रकाशोऽयमिति तच्छरीरं न स्यात् । एवञ्च संस्कारस्य चेन्द्रियस्य च धर्मिप्रतीति हेतोरुभयस्योपनिपाते किं विशेष्यांशे भिन्नाभ्यां ज्ञानाभ्यामुत्पत्तव्यम् उत कारणद्वयसम्भेदादभेदभाजा ज्ञानेन । प्रथमे प्रत्यभिज्ञानस्यैकज्ञानव्यक्तिताभ्युपगमव्याघातः भेदपक्षोक्तदूषणापातश्च । द्वितीये धर्म्यंशे प्रत्यभिज्ञायाः स्मृतित्वमप्यनुभवत्वमपीत्यनुभूति स्मरणसङ्कर इति विषयव्यवस्थयापि नियमो भग्नः । अथोच्यते माभूद्विषयोपाधिभेदाद्व्यवस्थानमुपाध्यन्तरात्तु भविष्यति तद्यथा संस्कारजन्यत्वमादाय

स्मृतित्वव्यवस्थितिरिन्द्रियसन्निकर्षजत्वमादाय चानुभवत्वव्यवस्थानमिति विरोधपरिहारोऽस्तु। न प्रमात्वसामान्यानङ्गीकारे प्रमारूपतायाः विषयव्यवस्थित्यैवोपगमे नोपाध्यन्तरोपन्यासेऽपि स्मृतित्वानुभूतित्वयोरेकस्मिन्नेव धर्म्मिण्यर्थे निवेशात्प्रमात्वाप्रमात्वयोरेकविषयतैव। किञ्च ज्ञानविकल्पानामध्यात्मभावाभावसम्बेदनात् स्मृतित्वानुभूतित्वयोर्द्वयोरपि प्रत्यभिज्ञायां स्वतः प्रतिभानेन विषयनिरूपणाव्यवस्थित्यनङ्गीकारे स्मृतित्वादेरिदन्तांशमपि स्मृत्यवगमप्रसङ्गात्। यदि च संस्कारजत्वमेव स्मृतित्वं तदा तस्यैव विरोधेऽभिधीयमाने स एव विरोधसामञ्जस्यायोपाधिरुपन्यस्यत इति नाम्यस्य चेतसि निविशते। अथान्यत्स्मृतित्वन्नाम तदाप्यनुपपत्तिः तथा हि संस्कारजत्वं संस्कारादनन्तरं नियमेन भावो नियतत्वञ्च नानाव्यक्तिगतमेकं रूपं संग्राहकमङ्गीकृत्य सम्भवतीति स्मृतित्वेनैव संस्कारजत्वं वक्तव्यं तथा च संस्कारजत्वव्यवस्थितौ स्मृतित्वमुपाधिः स्मृतित्वव्यवस्थितौ च संस्कारजत्व-

मित्यन्योन्याश्रयः तस्मात् स्मृत्यनुसङ्करो दुर्वार एव। अपि च स्मृत्यनुभवयो र्ये कारणसामग्र्यौ ते प्रत्यभिज्ञायां मन्तव्ये न वा। नचेत् कथमंशतोपि स्मृतित्वमनुभत्वञ्च प्रत्यभिज्ञानस्य एवमेव तथात्वेति प्रसङ्गात्। स्मृत्यनुभत्योः स एव सङ्करः प्रथमे पृथगेव कार्य्योत्पत्तिप्रसङ्गः प्रत्येकं स्वस्वकार्य्ये समर्थत्वात् सामग्रीभेदस्य कार्य्यभेदहेतुत्वेनावधारितत्वात्। अथ यत्र ते पृथक्जायेते तत्र पृथगेव कार्य्यं प्रत्यभिज्ञायान्तु तयोर्युगपज्जातत्वेन सम्भूयजननात्करम्बितकार्य्योत्पत्तिः। यद्यपि पटघटादिसामग्र्योर्नैवं दृश्यते तथापि तद्विलक्षणस्वभावत्वादनयोरीदृशत्वमुपपद्यते न हि एकस्य यादृक्पदार्थस्य स्वभावस्तादृगन्यस्यापि सर्व्वस्य भवति जगद्वैचित्र्यभङ्गप्रसङ्गादिति। नैतदस्ति यत्र हि मिलितत्वं तयोस्तत्र किं परस्परसहकारित्वमनयोरेष्टव्यं न वा। न चेत् परस्परमेलकलक्षणोविशेषोऽनुपयोगी कार्य्यजननं प्रति मिथः सहकारिभावविरहेणाप्रयोजकत्वात् ततश्चाविशेषात् पृथगेव कार्य्यं प्रसज्यते।

अथ परस्परसहकारित्वं तयोरिष्यते तदानुभवांशेऽपि संस्कारस्य व्यापारः स्मरणांशेप्यक्षस्येति नियामकत्वाभिमतयोरुभयांशे साधारण्यात् स्मृत्यंशेप्यनुभूतिरनुभूत्यंशेपि स्मरणमिति वज्रलेपायितं प्रत्यभिज्ञायामनुभूतिसङ्करेणेति। नाप्यनुभव एवेति पक्षः तथा सति तत्तावच्छिन्नस्याभेदाश्रयतायां न संस्कारोनेन्द्रियसन्निकर्षस्येति तदविषयत्वापातः नच संस्कारद्वारा प्रत्यासत्त्या सम्बद्धविशेषणतया तद्ग्रहः क्वचित् सोऽयं न वेति तर्हि संशयो न स्यात् दोषवशात्तत्र तत्प्रकाशो न सम्बद्धविशेषणत्वादिति चेन्न विनापि संस्कारं दोषवशात्तदापत्तेः। वस्तुप्रकाशिनि च दोषवाचोयुक्त्यनिरुक्तेः क्वापि तस्यावस्तुप्रकाशित्वाद्दोषस्येत् कथमक्षादेरपि तन्न स्यात् विशिष्टत्वेन तथात्वस्य प्रकृतेप्यपरिहारात् न हि विनैव कुतोपि विशेषादस्यावस्तुप्रकाशिता। सत्यप्यर्थे दोषादवस्तुन एव प्रकाशे संशयात्मेत्थावत्प्रष्टृत्त्वादेरसम्भवापत्तेः। वस्तुविषयत्वेपि दोषादनिश्चयतेति चेन्न वस्तुनस्तस्यासङ्कीर्णत्वात्तस्य प्रकाशे

तदेव संशयैककोटौ प्रकाशितमिति कुव तद-निश्चयता निश्चयार्थस्य च संशयकोटावखण्डने संशयेन तदभावाधिकग्राहित्वेपि निश्चयत्व-स्याप्रत्यूहत्वादेवाभावनिश्चयः कोट्यन्तरं केवल-मधिकं स्यात् जातिः संशयत्वं तत्प्रयोजकश्च दोष इति चेन्न इदं तद्वा न वेति संशयकोटयर्थ-निर्देशसमन्वयेन वा शब्द प्रतीतिव्यवहारयो-रभावापत्तेः प्रतीत्या सह वाकारार्थं सम्बन्धे प्रत्येमि न वेति पदापत्तेः वाकारार्थस्य प्रतीति गतत्वेपि निश्चयत्वतत्स्थाणुमानय पुरुषं वेति स्थाणुपुरुषगतपाक्षिकव्यवहारानापत्तेः तस्मा-द्वाकारार्थस्य ज्ञानधर्मत्वे साक्षात्कारित्वादि-वद्विषयानन्वयापत्तिरेवेति न च प्रत्यासत्तौ सत्यामपि प्रत्यासत्त्यपुरस्कारात्मनसा न ग्र-हणं तत्र दोषवशादित्यस्तु दोषे सत्यपि वस्तुनः संस्कारेण संस्कारस्यात्मना यस्य मनसा तस्य च वाह्येन्द्रियेण प्रत्यासत्त्यपेक्षिणएव तदर्थ-प्रकाशादिनियमोपपत्तेः कः प्रत्यासत्त्यपुर-स्कारस्त्वन्मते स्यात् यदि तु संस्कारप्रत्यासत्ति-मनपेक्ष्य तथा सन्दिह्यते तदा ह्यननुभूय

प्रसूत्य वा तथा सन्दिह्येत वस्तुतस्तु मनसा संस्काराग्राहिणा चक्षुरादिना चात्माग्राहिणा तादृशप्रत्यासत्त्या ग्रहणानुपपत्तेः। नियमेन तदिन्द्रियाग्राह्याश्रयप्रतियोगिकेतरस्य ग्रहणे स्वग्राह्यसम्बन्धविशेषणतायाः प्रत्यासत्तित्वनियमात् अन्यथाप्यपरमाण्वादौ पृथिवीत्वादेरन्यत्र ग्राह्यतया निरस्तस्वरूपायोग्यत्वस्याभावो दृगादिभिर्गृह्येत। नहीन्द्रियविहारदेशेषु निष्प्रसारणकत्वनियमोयुक्ताभ्युपगमः शब्दाभावप्रत्यक्षत्ववादिनये श्रोत्रेन्द्रियविशेषणता सप्तमः सन्निकर्षो न तु तत्र सम्बद्धविशेषणतेत्यतोपि न व्यभिचारः। नचात्मसंयुक्तमनः प्रतिपूर्व्वानुभूतार्थात्मप्रत्यासत्तिरेव संस्कार इति तदतीन्द्रियत्वं न दोषाय प्रत्यासत्तेरतीन्द्रियाया इन्द्रियार्थसन्निकर्षस्योपगमादिति स्वीकृते. निस्तारः तथा सति स इत्यंशे चक्षुरादेः प्रत्यासत्त्यभावात्प्रत्यभिज्ञाया अचाक्षुषत्वापातात्। अयमित्यंशो दृगादिना तदंशस्तु मनसा गृह्यतां तदेतदभेदस्तु केनेत्युक्तमप्यावर्त्तत इति एतेन संस्कारः सहकारिमात्रमिन्द्रियस्यातिप्रसङ्गनि-

वारकं प्रत्यभिज्ञायां तदर्थम् इन्द्रियेणासन्निकृष्ट एवोल्लिख्यते विभ्रमार्थवत्सन्निकर्षकृष्टग्राहिता चेन्द्रियस्य सन्निकर्षसहकार्य्यवश्यम्भावमात्रं तच्चेदमंशसन्निकर्षादेव स्यात्। ननु सर्वग्राह्यसन्निकर्षसहकारितेत्यपि निरस्तं सोऽयं न वेति संशयाभावापातेनैवेति। तदद्राक्षमित्यादिस्मृतिरपि चैवमनुभव एव स्यात्। मनस आत्मसंयोगसहकृततादात्मार्थसन्निकर्षात् संस्काराज्जायमानाया स्मृत्या इन्द्रियार्थसन्निकर्षजत्वादेव मनसा आत्मसंयोगसमवायेन प्रत्यक्षी क्रियमाणे ज्ञानादिभिः स्मर्य्यमाणस्यार्थस्याविशेषादिति एतेन तत्तावच्छिन्नप्रतियोगिकान्योन्याभावविरहः स्वरूपाभेदोवायं भातीत्यपि निरस्तम्। अन्योन्याभावव्यतिरेकोऽन्योन्यमेव तत्तेदन्तोपाध्यवच्छिन्नयोः स्यात् न च तन्मिलितमेकेन सुग्रहम्। एवं स्वरूपाभेदेऽपि तयोर्धर्म्मैक्यं तदनवगाहिना दुरवगममेव संस्कारोपनीते च विषये यदि ज्ञानमनुभवः स्यात् स्मृतिरपि कुतोनानुभूतिः। अथ न संस्काराधीनत्वमात्रेणास्मृतित्वं किन्त्वनुभव-

कारणासंसृष्टसंस्कारजत्वेन ततश्चाधिकार्थेन्द्रियसन्निकर्षापेक्षं प्रत्यभिज्ञानमनुभव एव भवति न तु स्मृतिरिति चेन्न संस्कारासम्पृक्तानुभवकारणजत्वेनानुभवत्वम्भवति। प्रत्यभिज्ञानन्तु संस्कारसहितानुभवकारणजं स्मृतिरेवेति वैपरीत्यं किन्न स्यात्। अन्यत्र न स्मृतिरनुभवकारणसंसृष्टसंस्कारजन्मेति तु नान्यत्रानुभवोऽपि संस्कारसंसृष्टार्थेन्द्रियसंयोगजन्मेति साम्यादेव बाधकम्। तदेवं विनिगमनायां प्रमाणाभावात् स्वयं कल्पितव्यवस्थानवैपरीत्येनापि कल्पनासम्भवात्प्रत्यभिज्ञानमुभयकारणसंप्लवात् स्मृतिश्चानुभवश्चेति मन्तव्यं तथाच स्मृतिव्यावृत्तमनुभवत्वं जातिरस्तीति दुष्प्रत्याशा निरवकाशा। नच विषयांशे स्मृतित्वानुभवत्वयोर्व्यवस्था कर्त्तुं शक्यते तन्निरासस्य निवेदितत्वात्। ततश्च तदेव ज्ञानं तस्मिन्नेवांशे स्मृतिश्चानुभूतिश्चेत्यापतितेऽपि यदि न विरोधबुद्धिर्भवतस्तदा तदधीने तत्रैवार्थे प्रमात्वापाते सास्तु। एतेन विरोधापत्त्यानुभवत्वस्वीकारे बाधकेन स्मृतिव्यतिरिक्तमनुभवत्वं नामानुगतं साक्षात्कार-

ज्ञानानुमित्यादिसाधारणमनुभवत्वमाद्रेव व्यव-स्थापनीयमिति प्रतीति कलहोऽपि निरस्तः। ननु चानुभव एव स्मरणमिह प्रत्यभिज्ञाने ह्यनुभवत्वमेवानुभूयते न तु स्मृतित्वं तेन संस्कारजत्वेऽपीन्द्रियार्थसन्निकर्षाधिकापेक्षया-ऽनुभवत्वमेवेति विनिगमनायामपीदमेव प्रमा-णम् अन्यथा प्रत्यभिज्ञानेऽनुभवप्रत्ययो न स्या-दिति प्रतीतिकलहेन प्रत्यवस्थेयमिति न इद-न्तातत्तावभासयोरनुभवस्मरणभागयोः सत्त्वे-नानुभवस्यैकपक्षे असाधारणीकृत्य प्रमाणयितु-मिहाशक्यत्वात्। एतेन स्मृत्यनुभवसङ्करप्रस-ङ्गेनानुभूतिपदव्यवच्छेद्यं परिसृतं मन्तव्यं न च वाच्यं प्रत्यभिज्ञानं व्यवच्छेद्यं माभूत् स्मृत्यन्त-रन्तु भविष्यतीति तस्याप्यनुभूतित्वेन भवता-वश्यस्वीकर्त्तव्यत्वात्। तथा हि घटस्तत्रासीदि-त्यादिस्मृतौ पूर्व्वकालविशिष्टो घटः स्फुरति न चासौ पूर्व्वमनुभूता भूततायाः संस्कारेणोपनीयते प्रत्युत पूर्व्वं वर्त्तमानतया एवानुभूत्या ग्रहणं तस्मादिदानीं पूर्व्वमननुभूतासामग्रीसम्भेदात् सोऽयमिति प्रत्यभिज्ञानवत्तद्विशिष्टतावगमो-

प्यसौ स्मृत्यनुभवात्मकएवाभ्युपगन्तव्यः। एते-
नानुभवसामग्रीसहितः संस्कारोऽनुभवकारण-
मिति पक्षे पूर्व्वं शङ्कित इदमपि दूषणं द्रष्टव्यं
तथा सति स्मृत्युच्छेदापत्तेः। नच तदस्ति स्मरणं
यत्र सा न प्रकाशते ततश्च व्यवच्छेद्यानुपपत्तिः
यदपि कैश्चिदुच्यते दोषवशात्प्रसुष्टतत्तांश-
स्मरणम्भवतीति तदपि नोपपन्नं तदीयस्मर-
णत्वे प्रमाणाभावात्। नचानुभवसामग्र्यभा-
वात्पारिशेष्येण स्मृतित्वम् इन्द्रियार्थसन्निकर्ष-
व्यावृत्तत्या अनुभवसामग्र्यभावात्पारिशेष्येणानु-
मित्यादेरपि स्मृतित्वापत्तेः। सर्वानुभवसामग्र्य-
भावादिति चेत् कथं पुनस्तत्तांशशून्यरजतादि-
ज्ञानहेतुसामग्री नानुभवहेतुसामग्रीत्यवधारितं
पञ्चप्रमाणीकरणसामग्र्यसम्भवादिति चेन्न
चतुष्प्रमाणीजनकसामग्र्यसम्भवात्पञ्चमी प्रमा
किन्न पारिशेष्यात्स्मरणं व्यवस्थापि क्कव वा
प्रतिपन्नं पञ्चप्रमाणीकरणसामग्र्यभावे जाय-
मानं ज्ञानं स्मृति र्भवतीति घटसत्त्वासीदि-
त्यादिज्ञानानामनुभवत्वोपन्यासस्य कृतत्वात्।
अथ मन्यसे प्रत्यक्षादिकरणसामग्र्यनुपपत्त्या

रजतमात्रस्य च पूर्व्वमनुभूतत्वेन तद्विषयसंस्कारसम्भवात्संस्कारस्यैव हेतुताङ्गीक्रियते नत्वन्यत्कारणत्वेन कल्प्यते इन्द्रियार्थसन्निकर्षाद्यसम्भवे जायमानस्य त्वनुमानादेरननुभूतविषयत्वेन तस्मान्नोत्पत्तिसम्भव इति तत्कारणं लिङ्गादिकमङ्गीक्रियते अतः प्रमाणान्तरासहकृतसंस्कारजत्वं तद्व्यङ्ग्या वा जातिविशेष एव स्मृतित्वमिति। मैवम्। तत्र कारणत्वं किमिति नाद्यस्यैव येन संस्कारजत्वं व्यवस्थाप्यते तेनार्थेन सह तदाद्यस्य सन्निकर्षाभावादसन्निकृष्टस्य च तस्य ज्ञानजनकत्वेऽतिप्रसङ्गात् नेन्द्रियजत्वं तस्येति चेन्न संस्कारस्यापि केवलस्य तज्जननेऽतिप्रसङ्गतादवस्थ्यात्। सहचरितधर्मदर्शनादिना सहकारिणा युक्तस्य संस्कारस्य तज्जननेनास्त्यतिप्रसङ्ग इति चेन्न तेनैव सहकारिणा सहितस्येन्द्रियस्यापि तज्जननेनातिप्रसङ्गाभावात्। अननुभूतेपि तर्हि प्रसङ्ग इति चेन्न तत्रापि तद्धर्मतावधिगततद्धर्मवत्यधिगते तस्य संस्कारवतः स्मृत्यापत्त्या समाधिसाम्यात्। लुप्ततत्ताकस्थैर्य्यदर्शनजरं

तथा सति तत्सहचरितरजताद्यग्रजप्रतीतिप्रसङ्ग इति चेन्न तवापि मते तादृशस्य रजतादिसंस्कारवतो रजतादिस्मृतिप्रसङ्गसाम्यात् तस्माद्यवस्ते कालव्यवधानादितः संस्कारलोपतदनुपनिपातस्यापि हेतुत्वोपगमेनातिप्रसङ्गात् तथा कालादिव्यवधानाद्यभावसहृशदर्शनसहकृतस्य चक्षुषो युक्तं तदेवं [तत्सदृक्प्रत्यभिज्ञानं यत्ते संस्कारबोधकं सहकारितदेवास्तामचस्यातिप्रसक्तिनुत] तत्सदृशप्रत्यभिज्ञानन्तु स्मर्त्तव्य स्मरणपूर्व्वकमित्येतदपि सममेव तथाप्यन्यत्रार्थसन्निकर्षमन्तरेणेन्द्रियस्य ज्ञानकारणत्वं नोपलब्धचरमिति चेन्न विशिष्टरूपेण भ्रमविषये मया तदुपगमात् सहकारिभूतदोषशक्तेर्वा प्रत्यासत्तित्वेनेष्टत्वात्। किञ्च संस्कारस्यापि प्रमाणान्तरासहकृतस्य नान्यत्र ज्ञानजनकत्वं दृष्टमिति तदपि कथं कल्प्यते प्रत्यभिज्ञान एव संस्कारस्य सदृशदर्शनादिसहकारित्वं कल्पितं नत्विन्द्रियस्येति चेन्न प्रत्यभिज्ञाने संस्कारेन्द्रिययोर्द्वयोरपि कारणत्वात् सदृशदर्शनादिसहकृतत्वदर्शनादि विशेषात्

अत्र सदृशदर्शनसहकारित्वे संस्कारसहकारित्वस्यापि प्रसङ्गः प्रत्यभिज्ञानवदिति चेन्न तथा सति तद्वदेव तत्तोल्लेखापत्तेः। सदृशदर्शनादिसहकृतत्वेन च तत्ताप्रसञ्जने संस्कारजन्यत्वस्योपाधित्वम्। नच सदृशदर्शनसहकारितैव तत्ता प्रयोजिकात्र त्यज्यतां न संस्कार इति युक्तं सदृशदर्शनं परित्यज्य संस्कारे सत्यप्यतथाबोधात्। तथापि सदर्थे प्राप्यकारित्वमिन्द्रियस्य दृष्टं न हातुं शक्यमिति चेन्न उक्तमत्र यथेन्द्रियस्य प्राप्तिसहकृतस्य ज्ञापकत्वं दृष्टं तथैव संस्कारस्यापि प्रमाणान्तरसहकृतस्य ज्ञापकत्वमुपलब्धमिति तदपि हातुं न युक्तमिति संस्कारस्यापि चेन्द्रियप्रत्यासत्तित्वस्वीकारेण तद्विरहासिद्धेः। तत्तांशमोषकल्पनञ्च स्वतन्त्रसंस्कारजत्वपक्ष एव यावदधिकं युक्तस्यायं तत्तांशमोष इति विचारमधिकरोति पूर्ववर्त्तमानादिकालविशेषविशिष्टस्य रजतादेरेकस्मिन्ननुभवे प्रकाशिततया तज्जन्येन संस्कारेणापि तथैवोपनेतुमुचितत्वात्। प्रत्यभिज्ञायां तथैव फलदर्शनात् दोषवशात्तत्तांशमोष इति

घेन विषयसम्बन्धस्य स्वभावत्वेन संस्कारे तद-लोपात्। दोषस्तत्र तथेति चेत् कः पुनरसौ दोषः यस्मादभ्रान्त्युत्पत्तिः परेषामिति चेत्तर्हि तद्रजताविशिष्टमिदं रजतमित्यत्र सैव रजत-व्यक्तिरियमित्यत्र वा पुनस्तदेव रजतमुपस्थित-मितीह वा सामान्यतएव रजतस्य तदापि परामृष्टस्य भ्रान्तौ तत्तांशमोषः स्यात् दोषस्य विद्यमानत्वात् अन्यथा इदं रजतमित्यंशेपि तस्मिन् ज्ञाने तत्तांशमोषो न स्यादित्यास्ता-मियं प्रसक्तानुप्रसक्तिः । नच प्रत्यभिज्ञानं स्मर-णानुभवाभ्यामन्यएव प्रकार इति वाच्यम् अननुभवत्वेनाप्रमात्वापातात् । नचैवमस्त्वित्यपि वाच्यम् क्षणिकवादिना स्थिरसिद्धौ प्रमा-त्वेनोपन्यस्तत्वात् । इदंयप्रसिद्धलक्षणत्यागेन च लक्षणोपादानेऽनियमः प्रसज्येतेति तस्माज्ज्ञा-तिवाचिनोऽनुभवपदस्य स्मृतितोव्यवच्छेदार्थ-मुपादानमिति सर्व्वथानुपपन्नमिति । नापि स्मृत्यन्यत्वमनुभवार्थः नापि स्मृतिलक्षणरहित-त्वम् उक्तक्रमेण स्मृत्यनुभूतिसङ्करस्य दर्शित-त्वेन व्यवच्छेदकत्वानुपपत्तेः । इतोपि न स्मृत्य-

न्यत्वमनुभवार्थः तथा हि स्मृत्यन्यत्वं यत्किञ्चित्स्मरणान्यता वा सर्व्वस्मृतिव्यक्त्यन्यता वा स्मृतित्वरहितत्वं वाभिप्रेतं प्रथमे स्मृत्यन्तराव्यतिरेकात् स्मृत्यन्तरमप्यनुभूतिः स्यात्। न हि यतो व्यतिरिक्ता स्मरणव्यक्त्यन्तरादेका स्मृतिव्यक्तिस्तत् स्मरणमेव न भवति येन तदन्यत्वं न स्मृत्यन्यत्वं स्यात्। नापि द्वितीयः मदीयादिस्मृतिव्यक्तिभ्यो हि भवता कथंकारं व्यतिरिक्तत्वमवधारणीयं प्रमायाः तासां सर्व्वासां भवता प्रत्येतुमशक्यत्वात् तथा हि न तावत्परकीयज्ञानेऽपरस्याक्षाद्यध्यक्षसम्भवः नाप्यनुमानार्थापत्ती लिङ्गानुपपद्यमानयोः सर्व्वथाप्यग्रहात् प्रत्येतुमशक्यत्वात् नापि शब्दः सर्व्वत्र तस्यासम्भवात् उपमानाद्यसम्भवोपि स्फुट एव। ततः कथं सर्व्वाभ्यः स्मृतिव्यक्तिभ्योव्यतिरेकोनिरूप्यः प्रमाया इत्यनवबोधादसिद्धिर्लक्षणस्य। नच वाच्यं स्मृतित्वेन सर्वाः स्मृतिव्यक्तयः सर्व्वकालसर्व्वपुरुषसम्बन्धिन्यः स्वात्मीयां स्मृतिव्यक्तिं प्रत्यक्षतया प्रत्यक्षादेरनुभूयमाने सामान्यलक्षणेन्द्रियप्रत्यासत्त्या ज्ञायमानसामान्यप्रकाशादिव व्याप्य-

व्यापकव्यक्ताय इति दृष्टान्तदार्ष्टान्तिकयोर्दोष-
ग्रस्तत्वात्। तथा सति ह्येकं प्रमेयं प्रत्यक्षयतः
प्रमेयत्वसामान्य प्रत्यासत्त्या विश्वमेव प्रत्यक्षं
स्यात्। एवमभ्युपगच्छतश्च अहृधीमहि सार्वज्ञ-
मिदं यदि जानासि किमस्माश्चेतसि विपरि-
वर्त्तत इति नापि तृतीयः स्मृतित्वरहितत्वं हि
स्मृतित्वाभाववत्त्वं वा स्यात् स्मृतित्व प्रतियो-
गिकमाश्रयस्वरूपं वा तज्ज्ञानं वा न ताव-
दाद्यः तथा हि स्मृतित्वान्योन्याभावोपि स्मृति-
त्वाभावो भवत्येव तद्वत्त्वञ्च स्मृतिष्वप्यस्ति।
न हि स्मृतित्वमेव स्मृतिः ततश्च स्मृतेरपि
प्रमात्वापातः तद्व्यवच्छेदाद्विशेषणवैयर्थ्यञ्च
विना विशेष्यमिच्छादावतिप्रसङ्गात् स्मृतित्वस्य
संसर्गाभावास्त्र विवक्षित इति चेन्न तथा हि
स्मृतित्वस्य संसर्गाभाव इति किमुच्यते किं
स्मृतित्वविशिष्टस्य संसर्गस्याभावः उत संसर्ग-
विशिष्टस्य स्मृतित्वस्य अथान्यदेव यत्किञ्चि-
दनया वाचोयुक्त्या विवक्षितम्। आद्ये स्मृतित्व-
संसर्गान्योन्याभावः स्मृतावस्तीति स एव प्र-
सङ्गः न हि स्मृतित्वसंसर्गः स्मृतिः। अतएव

न द्वितीयोपि न हि संसर्गविशिष्टं यत्स्मृतित्वं तदेव स्मृतिव्यक्तिः ततश्च संसर्गविशिष्टस्मृतित्वेन सह स्मृतिव्यक्तेरन्योन्याभावमादायोक्तदोषानिवृत्तिः एवं तत्र तत्रापि संसर्गविशेषणप्रक्षेपे दोषानिवृत्तिरेव अनवस्थायां वा पर्य्यवसानं विशेषणप्रक्षेपपरम्परायाः। नच वाच्यं स्मृतित्वसंसर्गस्य न संसर्गान्तरेण सम्बन्धित्वं किन्तु स्वभावतएव तत् कुतः परम्परागवेषणं कार्य्यमिति। स्मृतित्वसंसर्गस्यान्योन्याभावमादाय कृतस्य प्रसङ्गस्य परिहर्त्तुं तदानीं सुतरामशक्यत्वात् संसर्गान्तरविशेषणवचनस्याधिकार्थे पर्य्यवसायित्वात्। किञ्च तदुभयस्वरूपातिरेकं तत्संसर्गस्यामन्यमानेन स्मृतित्वसंसर्गोधर्म्मिस्वरूपं चेत्येतयोः संसर्गात्मत्वे व्यवस्थाप्यमानेनुभूतौ कथं तादृशस्य संसर्गस्य निषेधः किमनुभूतेः स्वरूपं नास्ति उत स्मृतित्वसंसर्गस्य ततः कस्य निषेधः। धर्म्मान्तरभूतस्य च संसर्गस्य निषेधे स्मृतावपि प्रसक्तस्तदवस्थः स्मृतौ तस्यार्थान्तरभूतस्य भवता अनुपगमात् स्वरूपमेव तयोः सम्बन्ध इति तत्र भवतो-

ऽभ्युपगमः। अथोच्यते अनुभूतिस्मृतित्वसंसर्गयोः स्वरूपसम्बन्धेऽपि न परस्परसम्बन्धबुद्धिजनकत्वं तयोस्तादृशत्वञ्च यत्र तयोस्तत्र सम्बन्धात्मकत्वं स्वरूपयोरुच्यत इति। नैवम्। विशेषोपसंग्राह्यासिद्धौ तस्याप्यनुपपत्तेः उपसंग्राह्कान्तरोक्तौ तत्सम्बन्धेनापि प्रसङ्गेनापरापरोपसंग्राहकगवेषणायामनवस्थापातात् तावतापि चानुभूतिस्वरूपे कस्य निषेधो वर्णितः स्यात्। स्मृतित्वसंसर्गानुभूतौ सम्बद्ध इत्येवं रूपबुद्धिजनकत्वस्येति चेन्न भ्रान्त्यात्मिकाया ईदृशबुद्धेर्जनकत्वस्य वारयितुमशक्यत्वात्। यथार्थाया इति चेत् ईदृशबुद्धिर्यथार्थाया यदि सत्त्व मभ्युपेषि तदानुभूतौ स्मृतित्वप्रसङ्गः अथ नाभ्युपैषि किं प्रति तस्य जनकत्वाभावोनिरूप्यः। अथाद्यन्तासतीमेव तादृशबुद्धिं प्रति जनकत्वाभावधारणमनुभूतेरभ्युपैषि तदा स्मृतावपि प्रसङ्गः यावत्यस्तद्बुद्धयस्तत्र जायन्ते तदधिकां तादृशबुद्धिमत्यन्तासतीं प्रत्यजनकत्वस्य स्मृतावपि सम्भवात्। सर्वामेव तादृशबुद्धिं प्रत्यजनकत्वमनुभूतेर्मत्वेवं स्मृतेरिति

चेन्न सर्व्वं तद्व्यक्तिप्रमित्यसम्भवात्। किञ्च सर्वा-मिति कोऽर्थः किमसतीं सर्व्वाम् उत सतीम् अथ सतीमसतीञ्चेत्युभयीमपि प्रत्यजनकत्वम्। आद्ये द्वितीये च स्मृतावपि तदजनकत्वमस्त्येव न हि स्मृतित्वसंसर्गस्मृतीसम्बद्धे इति या-वत्यः स्मृतिव्यक्तिषु बुद्धयो भवन्ति ताः प्रति प्रत्येकं स्मृतिव्यक्तिषु जनकत्वमिति काश्चित्-सत्यां सतीं प्रति च तदजनकत्वं प्रागेव दूषि-तम्। तृतीये नानुभूतावपि तदजनकत्वं सत्या-सत्यताद्दृग्बुद्धेर्भावेनाभावेन च सतीमसतीं प्रत्यजनकत्वस्यासम्भवादिति। स्यादेतत्स्मृति-त्वस्यान्योन्याभावमादाय यातिप्रसक्तिर्दर्शिता सा नोपपद्यते भेदाभेदवादिमते स्मृतित्वभे-दस्य स्मृत्या सहाभ्युपगमात् ययोर्भेदाभेद-स्तयोरन्योन्याभावानभ्युपगमात्। नैवम्। कथं त्ववधार्य्यं स्मृतित्वस्य भेदाभेदः स्मृत्या नानु-भूत्येति। अनुभूत्या सह तद्विशिष्टप्रमाया अ-भावादिति चेन्न किं सत्याः किमसत्या इत्या-द्युक्तविकल्पदोषात्। प्रागभावप्रतियोगित्वा-द्विशेषेण अनुभूतौ ताद्दृशाः स्वीकारेणानुभूते

भावाभावात्। प्रतियोगितयोरन्योन्या-
भावाभावत्वादन्योन्यात्मानुभूतावपि तुल्यः न हि
प्रतियोगितान्योन्याभावोऽनुभूतिरित्युक्तमावर्त्तते।
अथ माभूद्भेदाभेदमादाय परिहारः तथा-
पीदं न भवति इह तन्नास्तीति प्रतीतिसा-
क्षिक एवान्योन्यसंसर्गाभावयोर्भेद इति चेन्न
प्रतियोगिरूपोपाध्यवैचित्र्यादभावे जात्यादि-
भेदानभ्युपगमाच्च तयोर्भेदबुद्धिरेव प्रामाण्यनमङ्-
बाधः कूटसाक्षिणीति तदनादरणात्। न च
स्वप्रतियोगिसमानकालसमानाधिकरणोऽभाव
स्तदन्योन्याभाववांश्च तदभावः संसर्गाभाव-
यथाप्यन्यसमानाश्रयात्वमनुभवस्वभेदाननुगम
तत्तदवगमानभ्युपगमानामनुत्तरणीयत्वप्रस-
ङ्गात्। ननु संसर्गप्रतियोगिको निषेधः संसर्गा-
भावः तादात्म्यप्रतियोगिकश्च तादात्म्याभाव
इत्युक्त एव न भिन्नता तयोर्हि संसर्गतादात्म्ययो-
र्निषेधः संसर्गनिषेध एव न भवति तादात्म्य-
प्रतियोगिकत्वादिति। नैवम्। द्रव्यगुणकर्मणां
समवायिकारणेषु हि तेषां प्रध्वंसा नैवं संस-
र्गाभावाः स्युः। संसर्गप्रतियोगिकत्वेन संसर्गस्य

दभ्युपगमस्यापि तयोः स्वरूपोपगमात् तथाभूतं स्वरूपमिति चेन्न तस्यैव निर्वाच्यतापत्तेः। काञ्च गोत्वाश्वत्वाभ्यां भावाभावयोरेवम्बिरोधे विशेषः स्यात् सत्वाञ्च तयोः साहित्यप्रमायां प्रकारभेदेन व्यवस्थापना किमिति कार्य्या प्रमयैवा प्रमानुपगमादिति। अथ घटादिविशेषितयोस्तयोर्निषेधौ तौ सविशेषणौ च विधिनिषेधौ न कथञ्चिद्विशेषणमनुमक्रम्य स्यातामिति ब्रूषे तदपि न तर्हि विशिष्टस्य निषेधोविशेषणस्यापि भवतीति संसर्गान्योन्यनिषेधोऽपि संसर्गनिषेधः स्यादेवेति पुनस्तत्प्रसक्तोवकाशोपायते। अन्योन्याप्रतियोगिकः संसर्गप्रतिषेधो यथा विवक्षितः एवमन्योन्यनिषेधोपि संसर्गाप्रतियोगित्वेन निर्वाच्य इति चेन्न एवं ह्यन्योन्यसंसर्गाभावः संसर्गान्योन्याभावश्चापरा कोटिः स्यात्। किञ्चैवं सति संसर्गाभावोन्योन्याभावो यो न भवति स संसर्गाभावतया विवक्षितः इत्युक्तं स्यात् तथा च संसर्गविशेषणं व्यर्थमिति संसर्गाभावमर्थमधिकमाकाङ्क्षता तथात्वेऽपि संसर्गाभावमध्येऽपि पातितः स्यात्।

त्वदभिमतस्य कथं स्यात् व्यवच्छेदस्य निषे-
धाधीनत्वात् । अथ माभूदधिकोऽसौ स्वरूपमेव
तु तथोच्यत इति तदा तवैव व्यवहार एव वि-
शेष इति चेत् तर्ह्यन्योन्याभावसंसर्गव्यतिरे-
केऽपि तुल्यमेतत् । अपि च अन्योन्यप्रतियो-
गिको न भवत्यभावो यः संसर्गाभाव इति व-
दता त्वयाऽन्योन्यप्रतियोगिकेऽभावे निषिध्य-
मानेऽन्योन्यात्मकोऽभावभावोऽभ्युपगतः स्यात्
द्वयोर्निषेधयोः सुन्दोपसुन्द तया अन्योन्यस्यैव
सौख्यापत्तेः । तथा च सत्यन्योन्यस्मिन्निर्विशे-
षणे जगदेव प्रविष्टमिति संसर्गाभावत्वेन विरु-
द्धस्य जगदात्मतायां सिद्धन्त्यामन्योन्याभा-
वात्मतापि स्यादिति व्यर्थो विशेषणप्रयासो ह्यासा-
र्वेव सविशेषणेऽप्यविशेषणत्वप्रसङ्ग इति महत्-
कौतुकम् । ननु घटाभावो न भवति तस्य
इत्युक्ते किं सम्बन्धो घटात्माभिषिक्तो भवति तत्
कस्य हेतोः तदा हि तथा स्यात् यदि घटस्वरू-
पत्वेनैव न भवत्येवात् । यदा तु सत्त्वादिरूप-
भवनकोटिरस्ति तदा कथं तथा स्यादनुप-
पत्त्यनवकाश इति । नैवम् । यथा घटत्व-

भावाभ्यामन्या वस्त्वादिकमप्यस्ति कोटिस्तथा-ऽन्योन्यान्योन्याभावाभ्यां नान्यकोटिः सम्भवति निर्विशेषणेऽन्योन्यमध्ये जगत एव प्रवेशात्। तदात्मनोपि निषिध्यमानत्वे तन्निषेधात्मके तदात्मनि जगत्प्रवेशात् न हि घटः पटात्मेत्य-नेन घटस्वरूपादन्यस्तदात्मा विहितः स्यात् यदि तु तादात्म्यं नामाभेदाख्यो धर्मः कश्चि-दिष्यते स घटपटाद्यधिकरणतया निषिध्यते तदा संसर्गाभाव एव स्यात्। तस्मान्निर्विशेषेण तदात्मान्तर्भूतं जगदिति कोट्यन्तराभाव इति। अपि च एवं तर्हि घटे निषिध्यमाने घटाभावो-विधीयते घटाभावे च निषिध्यमाने घट इत्यपि न स्यात् तृतीयस्याविद्यमानत्वात् भवन्वा घटा-भावः स्तम्भो न भवतीत्यत्रापि घटाभावस्याविशेषाद्विशेषान्तरानिर्वचनाच्च। घटः स्तम्भात्म-त्वेनोक्तः स्यादिति त्वत्प्रसङ्गः त्वयि निपतेत्। संसर्गान्योन्याभाववैचित्र्यमादाय स परिहार्य्यः स एव च नाद्यापि व्यवतिष्ठते अतएव प्रतीति-बलादन्यदेव वैधर्म्यमनयोरुपेयमित्यपि निर-स्तम्। प्रतिषेधप्रतियोगिविरोधे हि प्रकार-

स्फूर्तिः स्फूर्तौ च भानमभानं चैकत्वमन्यत्वमपि न तथापीष्टव्यत्वात् तयोः परस्परप्रतिक्षेपरूपत्वात् न हि रूपरसयोरेकत्वाभावेन तत्सामानाधिकरण्याभावः स्यात् समाविष्टयोर्भावाभावयोः परस्परप्रतिक्षेपात्मकत्वेन सिद्धेरिति चेत् न हि तथाविधयोर्भावतदभावपदसङ्केतनं न रूपरसयोरिति कश्चित्ते प्रमाणं रूपरसयोः परस्परप्रतिक्षेपानात्मकत्वात्तदभावे तयोः सामानाधिकरण्यभाव आस्ताम् अत्र तु नैवमिति चेन्न तथात्वस्य सामानाधिकरण्यप्रयोजकत्वे तद्व्यतिरेकः सामानाधिकरण्यप्रयोजकः स्यादिति रूपरसादीनामसामानाधिकरण्यापत्तिः भावाभावयोरसामानाधिकरण्यानुपपत्तिश्च। असामानाधिकरण्यमेव यत्रेति विवक्षितमिति चेन्न एवकारार्थदौर्वच्यात्। एतेन विलक्षण एवायमभावो भावसहासनमनुपेयो एवकारसमभिव्याहारिणोच्यत इति विरस्तं तदपि नैवलक्षण्यं प्रतियोग्याश्रयनियमतात्पर्येऽपि सामानाधिकरण्यविरहस्य तुल्यत्वं तत्र तुल्यमभावाभावयोः सामानाधिकरण्या-

भावेप्रत्ययेनेति चेन्न प्रत्ययविशेषव्यापारस्य स्मृतावपि भावात्। अन्योन्याभावव्यतिरिक्तः स्मृतित्वाभाव इत्युक्तौ च स्मृतिव्यतिरिक्तपक्षोक्त एव दोषः तदा स्तां विस्तरः। नापि स्मृतित्वप्रतियोगिकसामान्यस्य स्वरूपं तद्धीर्वेति पक्षः। अन्योन्याभावेऽपि भवतामभावव्यवस्थायास्तादृशत्वेनोक्तप्रसङ्गस्य समानत्वात्। अथान्यदेव किञ्चित्संसर्गाभावनिर्वचनं क्रियते तथा हि स्मृतित्वस्य यत्र संसर्गितया निषेधस्तत्र तदभावस्य संसर्गाभावत्वं यत्र तु तदात्मत्वेन तत्र तदभावस्य न संसर्गाभावता किन्त्वन्योन्याभावत्वमेव स इह न विवक्षितः पूर्व्वक एव तु संसर्गाभावोविवक्षित इति नैतद्विचारसहं संसर्गितया निषेध इति येयं तृतीया सा लक्षणे वा सहयोगे वा कारकभेदे वा करणादौ। नाद्यः संसर्गितया लक्षितस्यैवान्योन्याभावमादाय प्रसङ्गात्। नापि द्वितीयः तत्सहितस्यैवान्योन्यनिषेधस्य प्रत्याख्यातुमशक्यत्वात्। तृतीयस्तु न सम्भवति अत्यन्तनिषेधस्यानुत्पत्तिधर्मकत्वात्। तस्य च अप्रत्योदाहरणत्वात् प्रत्यालोचनीयं

तृतीयेति चेन्न प्रकारशब्दार्थस्याविकस्य निर्वक्तव्यत्वापातात्। प्रकारः प्रकार एवेति चेन्न अविदितलक्षणस्य लक्षणमनभिधायेतरव्यवच्छेदेन तस्य दर्शयितुमशक्यत्वात् अन्यथा सर्वत्र प्रष्टारं प्रति लक्षणानभिधानापातात् को घट इत्याष्टष्टे घट इत्येवोत्तरं सङ्गच्छेत प्रकार इति पश्नोनोपपन्नः सदोषत्वादिति वक्ता को दोष इत्यभिधायैव च निवृत्तोभवेदिति। स्मृतित्ववत् स्मृते र्लक्षणान्तरेण रहितत्वमनुभूतित्वमिति प्रत्युक्तं वेदितव्यम्। गृहीत ग्राहि ज्ञानं स्मृतिरिति च स्मृतिलक्षणे धारावाहिकज्ञानेऽति प्रसक्तिः। सापेक्षं ज्ञानं स्मृतिः सापेक्षता च स्वविषयानियमे समानविषयज्ञानापेक्षतेति चेन्न प्रत्यभिज्ञायां तत्ताभागस्य स्मृतित्वापत्तेः एवमस्त्विति चेत्तर्हि प्रत्यभिज्ञायां स्मृत्यनुभवभागयोर्भिन्न विषयत्वव्यवस्थितौ तदभेदः केन गृह्यतेति। संस्कारमात्रजं ज्ञानं स्मृतिरित्यपि न सामग्रीतः सर्वसम्भवेन लक्षणस्यासम्भवात्। असाधारणहेतुकधीत्वमिति चेन्न स्मातप्रत्यभिज्ञानेऽव्या-

प्रत्येकस्यात्ममनोयोगस्यासाधारण्यात्। कार्य्यैक्यानवधारणे च कारणत्वानवधारणात् तदैक्ये च तदेव लक्षणं स्यात् येन ज्ञानेनार्थो ज्ञातता-त्मकः क्रियते तदनुभवः येन तु ज्ञातता तथा तत्स्मरणमिति चेन्न ज्ञातोऽज्ञायते चेत्यनुमा-नादावव्याप्तेः। ततश्च विषयतः स्मृतिविवे-चनमशक्यतोवाक्येनाप्यनुभाव्यत्वात् कार्य्यकार-णाभ्यां चानुगतरूपस्य प्रागसिद्धेर्जातितश्च सङ्करप्रसङ्गादशक्यमिति। नापि चतुर्थः यतः कार्य्यगतवैलक्षण्यानवगमे क्व कारणता क्वासा-धारण्यं वा ज्ञेयमिति न केवलं प्रत्येकं पदा-र्थस्य तद्व्यवच्छेदकत्वस्य चानुपपत्तेर्मिलितेऽप्य-स्मिन् लक्षणे दूषणमुच्यते तथा हि तत्त्वानु-भूतिः प्रमेत्यनेन काकतालीयमपि यथार्थं ज्ञानं व्याप्यते यद्यथा पाणौ पञ्च वराटकानपिधाय कश्चित् पृच्छति कति वराटका इति पृष्टश्च काकतालीयन्यायेन ब्रवीति पञ्चेति ततश्च पञ्चेति ज्ञानमस्ति वक्तुः श्रोतुश्च दृश्यन्ते ताव-देतन्निश्चायकदाहरणानि। तच्च ज्ञानं न यथा-र्थत्वेन व्यवच्छेत्तुं शक्यम्। वस्तुतस्तस्य पञ्च-

संशयावच्छिन्नत्वेनातथाभूतत्वाभावात्। तादृगनु-
भवघटद्व्यवच्छेद्यमननुभूतचरत्वेन तादृशल-
क्षणोपेक्षणात्। नच वक्तुः संशय एव निश्चाय-
काभावादेकतर कोटिव्यवहारस्तु कथ्यादि-
प्रवृत्तिवदिति युक्तं तत्राप्याहार्य्यरूपैककोटि
निश्चयाख्यानादन्यथा संशयस्य कोटिद्वयसमु-
च्चयतापत्तेः। नच प्रमैव तदित्युत्तरीयकर-
णीयं मध्येऽप्यत्रादिदुरन्तभीतत्वात्। अव्यभि-
चारकारणजत्वे सतीति विशेषणीयमिति चेन्न
तत्त्वपदवैयर्थ्यापातात् काकतालीयसंवादमपि
ज्ञानं न व्यभिचारि साधारणकारणसामग्रीजन्य-
त्वात्तुमीयिषे व्यभिचारिणोपि कारणाविशे-
षाद्यायथार्थत्वप्रसङ्गात्। नह्यहेतुकमेवास्य यथा-
र्थत्वं नियामकाभावेनातिप्रसङ्गापातात्। अवश्य-
मस्याव्यभिचारित्वे अव्यभिचारि नियतमेव
कारणं वक्तव्यं किन्तदिति चेत् स्वात्मनैवात्र
प्रश्ने दीयतामुत्तरमावता येन नियतेषु प्रमा-
णादिषु चेदं ज्ञानमन्तर्भाव्यं प्रमासामान्यलक्ष-
णेन वा व्यवच्छेदव्यम् एवं [illegible]
[illegible]

लिङ्गमत्येव वा सत्यात्तद्यद्यपि लिङ्गाभासे न प्रमा न वा तद्वति लिङ्गिस्वरूपे तथापि विशिष्टं तथाविधं गोचरयन्त्यास्तस्या बुद्धे लिङ्गान्तरवति केवले वा लिङ्गिनि वह्न्यादावाप्यंशे विषये प्रामाण्य स्वीकारेणोक्तदोषापरिहारादिति । आभासकारणजत्वात्तद्विपर्ययस्य वस्तुभूतात्लिङ्गादेरन्यत्वमेवेति चेन्न विशेषस्यान्यत्वेपि तज्जातीयमात्रवत्ताप्रभासांशे दोषापरिहारात् । सामान्यसम्बन्धकोटिनिविष्टत्वात् विशेषस्य तस्य च तत्रास्थितस्यैव स्फुरणान्नैष दोष इति चेन्न विशेषाप्रतिभासे सामान्यतस्तन्मात्रवत्ताप्रतिभासस्याप्यभ्युपेयत्वात् देवदत्त यज्ञदत्तसम्बन्धितासंशयेपि पुरुषसम्बन्धितानिश्चयवत्सम्बन्धिविशेषस्य निर्लुठितविशेषरूपतया च प्रवेशे व्याप्यादेरननुगमप्रसङ्गात् सामान्यानुमानाभासे च संवादिति विशेषान्यतावत्सामान्यानानवकाशात् । सामान्यासमवाययोरप्यन्ययोरेव प्रतिभासे अन्यथाख्यातिं विनावासत् ख्यातिप्रवेशाघातात् । तत्रत्यधर्म्यन्तरस्य आत्मा तादात्म्यारोपः स्यादिति चेन्न तथापि

प्रमात्वाभ्युपगमादिति। नैतदुक्तं प्रकाशमानेन रूपादिसमवायित्वेन रूपेण ज्ञानस्यार्थसादृश्यानभ्युपगमेपि तत्र तदीयप्रमात्वाङ्गीकारादिति। प्रकाशमानरूपेण विशेषणभावादर्थसादृश्यमनुभवस्य विवक्षितम् अर्थस्य हि यथा समवायाद्रूपं विशेषणीभवति तथा विषयभावात् ज्ञानस्यापि तद्विशेषणं भवत्येवेति चेन्न एवं हि पुरोवर्त्तित्वादिना रूपेण तथाभावसम्भवात् पुरोवर्त्तिनीं शुक्तिं रजततया गाहमानं ज्ञानं प्रमा स्यात्। नच वाच्यमिष्यत एव सा प्रमापीति न व्यभिचारचोदनेयं युक्तिमतीति यथार्थताविशेषणवैयर्थ्यप्रसङ्गात्। अनुभूतिः प्रमेत्युक्त एव हि तावन्नास्त्यतिप्रसङ्गः सर्वस्य व्यभिचार्य्यनुभवस्यान्ततोऽन्यथाख्यातिवादिनंपि धर्म्मिण्यपि प्रमात्व सम्भवेन प्रमायामेवानुभवत्वस्य स्थैर्य्यात्। यदि त्वंशतोपि व्यभिचारि प्रमाणलक्षणं स्यादिति चेतसि निधाय यथार्थत्वं विशेषणं प्रयुक्तं तदा न युक्तमुक्तादोषात्। अथोच्यते प्रकाशमानेन रूपेण सर्वेण निर्विषयकभावाद्यथानुभवस्यार्थसादृश्यं सा प्रमा

नच तावता धर्मिणो धर्मविशेषणतया दोषः तथापि तद्भिन्नभ्रान्तरव्यवच्छेदकत्वादिति तर्हि व्यभिचारिज्ञानं धर्मिण्यपि प्रमाणं स्यात्तदी-त्मना साक्ष्या भावात् अव्यभिचारिणश्चांश-मननुरुध्य तदीयप्रतिकोटिनिक्षेप साङ्कि-र्याद्विभ्यता किमव्यभिचार्य्यंशानुरोधेन व्यभि-चार्य्यंशस्यापि प्रमाकोटिनिवेशनमेव नाध्यव-सीयते भवता शक्यन्ते ह्यनुभूतित्वज्ञानत्वादयः ताहृशाभिप्रायाविरोधिना लक्षणीकर्त्तुं यदि बाध्यर्थांशा धीरबाध्यार्थांशेप्यप्रमैव तदा सौ-भाग्यकुम्भादिवद्दूरत्वात्तुङ्गिनद्युतिविद्युदादिपर-भागाग्रहणादवयविताञ्च तावत्परिमाणाग्रह-णादल्पपरिमाणमुल्लिखन्त्यत्वं प्रमात्वेन लोक-प्रसिद्धमप्रमा स्यात्। क्व च लब्धं देशकालालो-कादिव्यक्तिसहितजलादिज्ञानस्य समस्तताद-र्थप्रवृत्ति सामर्थ्योदाहरणं येन तत्प्रामाण्यं मन्यसे। यदि च बाध्यार्थांपि बाधास्माध्येऽप्यंशे तद्धीधर्मिण्यस्त्वं समर्थयसे तदा तदर्थजातीयं बाध्यं तदर्थबाधाबाध्यमपि मिथ्येति मन्यमाने किमुत्तरं ते स्यादन्यत्र लोकप्रसिद्धमलोक-

रजतत्वारोपात् । प्रत्युच्यते प्रकाशमानेन रूपेण विशेषणत्वस्य यदर्थमाश्रयणमनुभवस्य तत्र प्रमात्वमिति विषय विशेषनियमेनैव प्रमात्वं लक्षणीयमित्येतदर्थमेव यथार्थविशेषणोपादानमिति । नैवम् । विशेष्यांशे अनुभूतिरेवं प्रमा न स्यादिति व्यवच्छेदकत्वं विशेषणत्वमभिमतं धर्म्यपि च स्वसम्बन्धाद्धर्मान्विशिनष्टीति नोक्तदोष इत्युक्तमेवेति चेन्न विशिष्टे प्रमात्वाभावापत्तेः । अपि च एवं तर्हि रजतत्वादिकमपि व्यवच्छिन्नत्त्येव शुक्तिकां रजततया प्रकाशिता शुक्तिव्यक्तिः सैवमिति । ननु साक्षाद्विशेषणत्वं विवक्षितं रजतत्वं तु ज्ञानद्वारा शुक्तिविशेषणमिति नातिप्रसङ्गः । नैवं तर्हि दीर्घदण्डः पुरुष इत्यादौ ह्रस्वदण्डादिभ्यो वैलक्षण्येपि विशेष्यस्यानुभूयमानेऽनुभूते न प्रमात्वं स्यात् दीर्घत्वादेर्दण्डादिद्वारा विशेषकत्वादिति स्वाश्रयरूपद्वारानपेक्षतया विशेषणत्वमिष्टमिति चेन्न साक्षात्कृत इत्याद्यवगमानामप्रमात्वापातात् । तज्ज्ञानप्रकाशितरूपेण विशेषणत्वमिष्टमिति चेत्तर्हि रजतत्वं रूपादेः समवायेन

प्राप्यमानेऽर्थे स्थितं किं विशेषमेकम् पश्यसि यमपरं च न पश्यसीति एष्य। प्रतिबोधनीयः तथाप्यनुपजातप्रबोधस्तु अज्ञतमः कश्चिद्यदि स्यात् स एवं प्रबोध्यः ये ते विशेषान्तरप्रवाह-स्वीकारेऽनन्तविशेषापत्तिभयात् त्वया स्वत एव विशेषरूपा इति स्वीकृताः तेषां स्वरूपं तावत् परस्परव्यावृत्तमतोऽनुगतैकरूपाभावादव्याप-कत्वं स्यादिति। बाधव्यवस्थाहेतुत्वादेवानुगति-रिति चेन्न क्वाचित्कबाधव्यवस्थाहेतोर्भ्रमेऽपि प्रकाशात्। तत्र तस्येति चेन्न व्यावृत्तेर्बोधस्य च तद्विपरीतार्थे प्रमात्वेन तदर्थानुगमात् प्र-माणाप्रामाण्यव्यवस्थापनादिति प्रकृतान्तराणि चार्वाकतःपराणि याथार्थ्यविशेषणादूषणादूषिता-न्यतोऽनुपतन्तीति द्विरभिधानभयान्नोक्तानि। किञ्च तर्कज्ञानमात्रार्थौ च संशयविपर्ययौ परिदृश्यमान एव विशेषे भवन्ति तैरतिप्रसङ्गः स्यात् नचाचार्य्यौ तौ नाभ्युपगन्तव्याविति युक्तं विप्रतिपत्तिकस्य वाक्यप्रयोग मूलत्वाचार्य्यैरभ्युपगतात्वस्य च गुरोः शिष्यप्रबोधार्थं विचारं प्रवर्त्तयतस्त्वाचार्य्यसंशयानां भवति एव मात्रे-

ऽनुमतत्वात्परिच्छेदः शब्दश्चानुभूतिपर्य्यायोऽनुभूतिदूषणं नातिक्रामतीत्यलम्।

नाप्यव्यभिचार्य्यनुभवः प्रमेति युक्तम् अव्यभिचारिपदस्य यदि तत्त्वविषयाद्यन्यत्वं तदा दूषणान्युक्तान्येवानुवर्त्तन्ते। अथेदमुच्यते अव्यभिचारित्वमर्थाविनाभूतत्वं तदा प्रष्टव्यं कोऽस्यार्थः किं यदैवार्थस्तदैव ज्ञानम् उत यत्रार्थस्तत्रैव देशे ज्ञानम् अथ यादृगर्थस्तादृगेव ज्ञानं यस्तत्प्रमितिरिति। नाद्यः अतीतानागतानुमित्याद्यव्यापनात्। न द्वितीयः ज्ञानासमानदेशार्थप्रमितावव्यापनात्। ज्ञानसमानदेशमर्थमन्यत्रारोपयतोऽप्यनुभवस्य प्रमात्वापत्तेः। नापि तृतीयः ज्ञानार्थभेदवादे सर्वाकारेण तत्साम्यानुपपत्तेः। अभेदवादे तु भ्रमस्यापि तथाभ्युपगन्तव्यत्वप्रसङ्गेन विशेषकाविषयपातात् ते हि विशेषः साकृत्यस्य विवक्षितत्वे यथार्थताप्रस्तावोक्तान्येव दूषणान्यापतन्त इत्यलम्। अविसंवाद्यनुभवः प्रमेत्यपि नयुक्तम् अविसंवादित्वं हि ज्ञानान्तरेण तदीयोऽविच्छिद्यमानार्थत्वं वा ज्ञानान्तरेण विपरीत-

तथा अप्रतीयमानार्थत्वं वा अप्रतीयमान व्याप्यविषयत्वं वा अन्यदेव वा किञ्चित्। न प्रथमः धारावाहिनो भ्रमस्य प्रमात्वप्रसङ्गात्। नच प्रमाभूतं ज्ञानान्तरं विवक्षितमिति वाच्यं प्रमाया एव लक्ष्यमाणत्वात् नापि द्वितीयः अज्ञातबाधभ्रमव्यापनात् सुस्थदशोत्पन्न शुक्लशङ्खज्ञानादेर्दुष्टेन्द्रियदशोत्पन्न तत्पीतिमज्ञानाद्युल्लिखित विषयवैपरीत्यस्याप्रमात्वप्रसङ्गाच्च प्रमित्यानुल्लिखितार्थवैपरीत्यभावविवक्षायां तु प्रमाया एव लक्ष्यमाणत्वादित्युक्तमनुषजति। अदुष्टकरणकज्ञानेनाबाधितत्वं विवक्षितमिति चेत्तदेव तर्हि प्रमालक्षणमस्तु। किञ्च दुष्टत्वनिरूपणमन्तरेणादुष्टत्वस्य दुर्निरूपत्वात्। ननु किमेतावता दुष्टत्वं विपरीतज्ञानप्रयोजकस्तद्धेतुगतोविशेष इति सुवचमेवेति न विपरीतपदव्यवच्छेद्याया: प्रमाया अप्रमितौ सत्यां प्रमितौ तदुपादानवैयर्थ्यात्। तदनुपादाने च ज्ञानजनकत्वामात्रं दुष्टत्वमित्यदुष्टकारणं ज्ञानं नास्त्येवेति स्यात्। विपरीतव्यवच्छेद्या प्रमैवेति चेत् सैव लक्ष्य-

माणत्वात् तदीयस्वरूपस्येतरव्यावृत्तस्याद्याप्रतीतेः कुतो व्यवच्छेदः प्रत्येतव्य इति व्यवच्छिन्नतज्ज्ञानमन्तरेण व्यवच्छिन्नतज्ज्ञानमप्यर्थमित्यात्माश्रयान्योन्याश्रयौ अनवस्था वा।
"एकोऽनेकविशेषेऽर्थे विशेषो यत्र लभ्यते।
तद्विशेषान्तरान्यत्वाद्दोष स्तत्रैव धावति।,,
नापि तृतीयः व्याप्यशब्देन व्याप्यमात्रं तद्विशेषो वा कश्चिदभिप्रेतः स्यात्। आद्ये सधूमाग्निविषयस्य स्वप्नज्ञानस्यानाप्तवाक्यज बोधस्य वा नाप्रमात्वं स्यात् नापि द्वितीयः स ह्यर्थक्रिया वा सामग्री वा उभयथापि पूर्व्वदोषानिवृत्तेः। एकदा च सर्व्वत्र प्रमाणासम्भवेन क्रमाश्रयणे तत्तदर्थक्रिया तत्सामग्रीरूपरावगमनियमाभ्युपगमे एकस्मिन्नेव विषये पुरुषायुषः पर्य्यवसानप्रसङ्गात् विच्छेदाभ्युपगमे त्वन्तिमावगमस्याप्रामाण्यादाप्रथमस्याप्रमात्वाप्तेः। वास्तवतदर्थक्रियार्थत्वस्य च दुर्निरूपत्वेन व्यवहारानङ्गत्वात् तथाप्रतीतिमात्रस्याप्रमासाधारणत्वात्। नन्वेवं चतुर्थः कल्पोऽस्तु तथा हि अर्थक्रियाकारिविषयत्वं वा विसंवा-

ऽदत्वमिति यथाह प्रमाणमविसम्वादि ज्ञानमर्थक्रियास्थितिश्चाविसम्वाद इति न सामान्यतो विवक्षायां भ्रान्तावपि प्रसङ्गात्। प्रतीयमानरूपेणार्थक्रियाकारित्वमर्थस्य विवक्षितमिति चेन्न दुरवधारणत्वात् तदर्थक्रियादर्शनात्तदवधारणमिति चेन्न विनाप्यर्थक्रियां तद्दर्शनसम्भवात्। अर्थक्रियाप्रमितिरभिप्रेतेति दूषितमेव प्रमाया एव निरूप्यमाणत्वात् अभिप्रायाविसम्वादात्प्रमाणं सर्व्वमुच्यत इति चेन्न तदा अभिप्रायाविसम्वादस्य स्वप्नादित्वयेपि सम्भवात् कालान्तराविसम्वादस्य च दुरवधारणत्वात्। एतेन प्राप्त्यादियोग्यताविसंवादोर्थ इत्यपि निरस्तं दुरवबोध इव चायं धर्मकीर्त्तिः पन्था इत्यवहितेन भाव्यमिहेति। अबाधितानुभूतिः प्रमेत्यपि निरस्तं तदानीं बाधविरहस्यातिप्रसञ्जकत्वात् कालान्तरेपि च बाधविरहस्य दुर्निरूपत्वात् स्वतो बाधविरहस्यातिप्रसञ्जकत्वात् सर्व्वजनबाधविरहस्य च दुरवधारणत्वाद्दिति। तर्कसंशयविपर्य्ययस्मृतिव्यतिरिक्ता प्रतीतिः प्रमेत्यपि न स्मृतेः

अविरिक्तखण्डनन्यायेन निरस्तत्वादिति ।
व्याप्तिसङ्करमिकृतश्च प्रमात्वलक्षणज्ञानभि-
सम्बन्धात् प्रमेत्यपि दुर्लक्षणम् यथार्थत्वस्य
तद्व्यवहारजनकत्वे प्रमायामप्रमात्वसंशययो
स्यातां दोषाभावसहकृतस्य तथात्वे ज्ञाय-
मान भ्रमसंशयप्रमादिव्यवहारे ज्ञानमात्राव-
गमोदाहरणेऽपि तदापत्तेः । ज्ञातेन लक्षणेन
व्यवहारे च कथमिदमेव ज्ञातव्यमिति वक्तव्यं
न तावत्प्रत्यक्षेण मानसेन तथा सति कश्चिज्ज्ञा-
तानां प्रमायामप्रमात्वविपर्ययसंशयानवकाशादि
स्यात् धर्मिवत् मनसैव निर्णीतत्वात् चिह्नान्तर
सापेक्षेण च मनसा सम्वेदनं चिह्नेनैव मान-
गतेन लक्षणीभूय ज्ञापनमित्यपि प्रत्याशामात्रं
तच्चिह्नेनैव प्रमात्वकल्पनाप्रतिक्षेपापत्तेः ।
तेषां नानात्वे च कथं तानीति वक्तव्यं स्यात्
तच्चिह्नानां यथोपन्यासं सर्वेषामेव दूषितत्वात्
प्रामाण्यपरतस्त्वव्युत्पत्तिप्रस्तावे तु विस्तरेण
दूषयिष्यामः । एतेन प्रतिक्षिप्तम् प्रमाणं त-
त्त्वेन प्रमात्वलक्षणमित्यपास्तं [illegible] ।
यथार्थानुभवमात्रं लक्षणमुच्यते तदर्थं

ज्ञातमात्रं वा यदि तत्त्वव्यवहारकं तदा बाधा-पत्तिः प्रमितत्वे प्रमानवधारणे तदनवधार-णता। मात्रधारि वस्तुतस्तु तथेति चेन्न वस्तुतो न तथैव किन्त्वेति वादिन्यनुत्तरापत्तेः प्रमात्व-निरूपण वैयर्थ्यापाताच्च। वस्तुतस्तु प्रमेय एव घटादितत्त्वव्यवहारोऽपि तद्धस्त्वित्यासां विस्तरः।

एवं प्रमितेरनिरुक्त्या प्रमाकरणं प्रमाण-मित्यप्ययुक्तं करणार्थो निरुक्तेश्च। ननु कार-कान्तरेऽचरितार्थस्य हेतुत्वं करणत्वं कर्त्तु र्हि करणं निष्पादयतः कारकान्तरे चरितार्थत्वं स्वरूपतोऽनिष्पादनेऽपि व्यापारवत्तया निष्पा-दनात् तादृशस्य च तस्य करणत्वात् एवं क-र्मापि करणनिष्पादने चरितार्थं करणव्यापारो हि कर्मविषयो भवति कर्माभावे विषयाभावात् करणव्यापार एव न निष्पद्यत इति तन्निर्वाहे तस्यापि चरितार्थत्वमिति। एवमधिकरण-स्यापि करणव्यापारनिर्वाहकत्वं सम्प्रदाना-पादानयोस्त्वासार्व्वत्रिकत्वम्। करणन्तु सार्व्व-त्रिकमेवेति कारकान्तरेऽचरितार्थः सार्व्वत्रिको-

हेतुः करणमिति। नैवम्। अस्तु तावदविचारितरमणीयमिदं व्याख्यानम्, अन्तरशब्दो यदि विशेषमात्रवचनस्तदा न व्यवच्छेदकः। न हि विशेषमपास्य कारकमात्रं केनचित् अन्यतो व्यवच्छिद्येत। नापि चान्तरशब्दोऽन्यवचनः तथा सति कस्मादन्यदिति विशेषानिर्देशे करणादिति समभिव्याहारालभ्येत यथान्य आत्मा शरीरमन्यदित्यादौ तथा सति करणव्यतिरिक्तकारकाभिप्रायेण प्रयुक्तः स्यात्। तच्च नाकरणस्यैवाद्यापि निरूप्यमाणत्वादतिव्याप्तेश्च। नापि कर्तृकर्मणोः स्वरूपोपादानपरोऽयमन्तरशब्दः ताभ्यामेवातिव्याप्त्यापत्तेः। नापि कर्तृकर्मणी अपेक्ष्यान्यदन्तरशब्दार्थः वैयर्थ्यापातात् कारके चरितार्थत्वमेवोच्यताम्। तापनविकार्य एवायमिति न प्रयोक्तव्योऽन्तरशब्दः तथा सति करणजनकं हस्तादि न करणं स्यात् व्यापारवद्धि कारणं करणमुच्यते। अस्ति च खड्गसंयोगादिव्यापारवत्तोऽस्यादेस्तथात्वम् अस्ति च हस्तादेस्तज्जनकत्वम्। तच हस्ताद्युत्कत्वमेवाभ्युपेयं व्यापारवतः कारणत्वेन तद्

कारकत्वस्यावश्याभ्युपेयत्वात् कर्त्रादिषु दुरन्त-
र्भावत्वात् सप्तमकारकस्वीकारापत्तेः । नच
व्यवधानाव्यवधाने तुल्यमेतेषां किं नाम हेतुहेतु-
त्वमिति कर्त्तुरप्येवमप्रसङ्गात् । पुंव्यापाराद्धि हस्त-
स्पन्दादि स्तेन कुठारक्रियादि स्ततश्छिदेति
परम्पराव्यवधानात् । सत्यं कर्तृव्यापारपर-
म्परा न तस्य हेतुतां हन्तीति चेत् तुल्यं त-
स्मात् करणत्वेनावश्याभ्युपगन्तव्यहस्ताद्यव्या-
पकत्वादलक्षणमिदम् । एतेनापि कारकान्तर-
शब्दः कर्तृकर्मव्यतिरिक्तवचन इति पक्षोऽप्यु-
दास्यः । कर्तृव्यापारविषयः करणमित्यपि न
शरीरचालनाय प्रयतमानस्य निष्पाद्या शरीर-
क्रिया क्रियाविशिष्टं वा शरीरं प्रयत्नलक्षण-
कर्तृव्यापारविषयीभवतीति तस्यां क्रियायां
करणं स्यात् । नचैतत् शक्याङ्गीकारं भविष्यतः
सम्प्रति कारकत्वानुपपत्तेः । नच साक्षात्कर्तृ-
व्यापारविषय इति विशेषोपादानेऽप्यस्य परि-
हारः साक्षाद्व्यापार्य्यमनःप्रभृतिक्रियायां प्रस-
ङ्गतादवस्थ्यात् अव्यापकत्वाच्च । अथ तत्क्रिया
हेतुस्तत्क्रियाकर्तृव्यापारस्य विषयस्तत्क्रियाक-

करणमिति मन्यसे न अनीश्वरवादे अङ्कुरा-
दीनामकरणत्वप्रसङ्गवत् सुषुप्त्यनन्तरभाविन्याः
प्रमायाः परिगणितकरणोपाधिभेदपरिसंख्या-
तेषु प्रमाकरणेषु बहिर्भावप्रसङ्गात् अचेतन-
स्यापि कर्तृत्वे चातिप्रसङ्गात्। सेश्वरवादे-
ऽपीश्वरव्यापारविषयः सर्व्वं करणमिति नाक-
रणं कारणं स्यात् सोऽमित्यभिधाने च कारण-
मात्रं व्यवच्छेद्यमिति कारणं करणमित्येवो-
च्यतां वृथा विशेषणपूरणप्रयासः। अथ मन्यसे
न धर्म्यन्तरव्यवच्छेदाय विशेषणानि किन्त्वेक-
स्यापि धर्म्मिणो रूपभेदेन करणपदाभिधेय-
तोपदर्शनायेति एवं तर्ह्येतद्रूपालिङ्गितस्य
करणत्वाल्लक्षणोक्तिप्रवृत्तेन त्वया लक्ष्यमात्र-
मुक्तं भवेत्। नच लक्ष्यपदप्रवृत्तिनिमित्तमेव
लक्षणार्थः गन्धवत्त्वादेः पृथिव्याद्यलक्षणत्वा-
पत्तेः। अपि चैवं वस्तुमात्रं करणमित्यभि-
धायैव किन्न करणपदप्रवृत्तिनिमित्तमुपा-
दर्शि। स्यादेवं यदि सर्व्वत्र वस्तुनि करण-
व्यवहारः स्यादिति चेत् तर्हि त्वदुक्तलक्षणमपि
भवेत्। यदि सर्व्वत्र कारणे करणव्यवहारः

स्यादित्यपि पश्य न हि कर्त्तरि कर्मणि वा कस्यचित्करणव्यवहारः कर्त्तरि तावदस्ति लोके प्रमाणमिह देवदत्त इति शास्त्रेऽपि मन्वायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादितीति चेन्न किमयं मानवकेऽग्निव्यवहार इव गौणो मुख्य एव वेति संशये यदि त्वत्परिकल्पितान्निमित्तान्न मुख्यः स्यात्ततः कर्मण्यपि स्यात्तत एव निमित्तादिति बाधकदर्शनेन पारिशेष्यात् गौणतयैव तद्व्यवस्थापनाया युक्तत्वात्। अस्त्येव कर्मण्यपि तेन रूपेणेति चेन्न तावदयं शक्योपदर्शनोदाहरणः शास्त्रलोकयोः। क्व दृश्यते घटं पश्यतीत्यर्थे घटेन पश्यतीति यदि तु त्वद्वेतसि केवलं स्यात् तत्र च नादरं विधातुमुत्सहामहे। प्रमेयमात्रं करणमिति वदतो वामबुद्धेर्मनसि विपरिवर्त्तमानं प्रमेयमात्र एव करणव्यवहारास्तित्वमेवमनुरोद्धव्यं स्यादिति। घटेन पश्यतीत्याद्यनभिधानवशात्तत्प्रयोगो न हि सर्व्वं लाक्षणिकं प्रयुज्यत इति चेत् मास्तु तदभावे कोऽन्योऽस्ति तेषु करणव्यवहार इति वक्तव्यः स्यात् न चासौ शक्यदर्शन इति।

क्रियया अयोगव्यवच्छेदेन सम्बन्धि करण-मित्यपि न तथा हि अयोगव्यवच्छेदो योग एव पर्य्यवस्येदिति सम्बन्धेन सम्बन्धीत्युक्तं स्यादिति पौनरुक्त्यं यदासम्बन्धीत्यनेन कालविशेषनियतसम्बन्धवत्तयाभिधीयते ततोऽन्यस्मिन्नपि काले सम्बन्धिताऽयोगव्यवच्छेदपदेन विवक्षितेति चेन्न सम्बन्धीत्यनेन किं कालविशेषनियता सम्बन्धिताभिहिता येन कालान्तरेऽलब्धसम्बन्धिताभिधानाय पदान्तरमुपादीयते। अथोच्यते सम्बन्धीत्यस्य सामान्यतोऽभिधायिनः कालविशेषनियतं सम्बन्धमादायापि पर्य्यवसाने सार्थकत्वं भवत्येवेति कालान्तरेऽसम्बन्धितया व्यवतिष्ठमानं कर्त्राद्यपि करणं प्रसज्येत तद्व्यवच्छेदाय कालान्तरे सम्बन्धिता पदान्तरेणाभिधीयत इति नैवं तर्हि तेनापि क्वचिदेव कालान्तरे यदि सम्बन्धिताभिधीयते तदापि तस्य सार्थकता सम्बन्धि पदन्यायेन सामान्याभिधायिनो भवेदिति अतोऽपि कालान्तरे सम्बन्धव्यवच्छेदाय विशेषणान्तरमपि निवेशनीयं स्यात्। अथ यदा कदाचि-

दपि यो योगस्तस्य सर्व्वस्य व्यवच्छेदो विवक्षित इति तर्हि सम्बन्धिपद एवैषा विवक्षास्तु कृत-मधिकमुपादाय तद्विवक्षया। निषेधव्यवच्छेदेन सार्व्वत्रिकत्वलाभ इति चेन्न निषेधव्यवच्छेदस्य विध्यतिरेकार्थत्वेनाविशेषात्। तद्धर्मिकं सम्बन्धस्यासम्बन्ध्यसामानाधिकरण्यमयोगव्यवच्छेदेनेत्यनेनोच्यत इति चेन्न तस्यापि तत्त्वकाले तत्रासत्त्वोपगमात्। सर्व्वदेति चेन्न यद्येवं तत् किं करणासत्त्वकालेऽपि योग एव करणेन क्रियायाः यावत्सत्त्वमिति चेत्तर्हि सम्बन्धीति व्यर्थं यावत् सत्त्वमयोगव्यवच्छेदेन यद्विशिष्टमुपलक्षितं वा तत्करणमित्येवास्तु सम्बन्धीत्येव वा तथा विवक्षितमित्युक्तमेव। अयमेवार्थः कयापि कुसृष्ट्या सम्बन्धिपदसार्थकतामुपपाद्य यदि विवक्षितस्तदाप्युच्यते कृत्तिकोदयक्रियाया रोहिण्यासत्तिरप्येवं करणं स्यात् अनन्तरभाविनश्चतुर्दशस्य नक्षत्रस्योदयं प्रति पूर्व्वभाविचतुर्दशसंख्यनक्षत्रास्तमयस्य च कारणत्वं स्यात्। नचैवमेव युक्तं यौगपद्येन कारणत्वानुपपत्त्या कारकत्वस्य दूरनिरस्तत्वेन करण-

त्वस्य सम्भावनानारोहात् नच तत्र सम्बन्ध एव नास्ति व्याप्तेः स्वभावसम्बन्धात्मिकाया दुरप- ह्नवत्वात्। अथ कार्य्यकारणभावः सम्बन्धो विवक्षितः न असामग्र्याः कारणत्वापत्तेः। ओ- मिति चेत् तत्किमोमित्यभिधायैव निवृत्तो- भवान् आकलितं किलास्माभिः सामग्र्यमपि कारणमित्यत्र न श्रद्दधतः प्रणवपूर्व्विकां श्रुति- मेव काञ्चित्पठित्वा श्रद्धापयिष्यति भवानस्मा- निति। इह न सामग्री कारणं किन्तु तदेक- देशोनानाभूतः प्रत्येकं तया सामग्री तु यदन- न्तरं कार्य्यं भवत्येवेत्येतावन्मात्ररूपेऽति चेन्न एतादृशस्य सामग्रीलक्षणस्य करणेपि सत्त्वात् करणस्यापि सामग्रीत्वापातात् क्रियाविभागादौ च विभागसंयोगनाशादि प्रति तथात्वापत्तेः। यत्र प्रतिसामग्र्येकदेशं नियतप्रागभावादि- कारणलक्षणमिष्यते. तत्सामग्र्यमपीति कथं तदकारणता प्राक्कालमन्तर्भाव्य सामग्री तादृ- श्यास्तु तस्याः प्राक्सत्त्वमेव नास्तीति चेन्न तत एव प्राक्कालस्याकारणत्वात्कारणसामग्र्यां तद- निवेशात्। अपि चैवं विवक्षितमपि कारणं न

स्यात् न हि यावत्सत्त्वं व्यापारवतोपि तस्य क्रियाजनकत्वं क्रियाकाले क्षणमपि तदनुवृत्ति निषेधे प्रमाणस्य दुरुपन्यासतया संशयेनापि लक्षणसिद्धेः प्रत्युत चिरस्थिरकरसंयोगे स्पृश्ये स्पर्शप्रमाकरणस्पर्शनेन्द्रियसंयोगस्यैव्यर्थस्य मन्तुमुचितत्वात्। यावत्सत्त्वञ्च करणमिति भाषायां सर्व्वस्मिन् तत्सत्त्वकाले कारणत्वमित्यर्थो नच कारणत्वस्य नियतपूर्वकालसम्बन्धात्मकस्य क्वचित्काले सत्त्वं कालं प्रति कालान्तराभावादिति। अथ क्रियाया अयोगव्यवच्छेदेन सम्बन्धीत्यस्यायमर्थो यस्मिन् सति भवत्येव क्रियेति कोऽस्यार्थः किं यस्मादनन्तरं क्रियोत्पद्यत एव उत यस्मिन् वर्त्तमाने क्रियोत्पद्यत एव उत यस्मादनन्तरं क्रिया तिष्ठत्येव उत यस्मिन् वर्त्तमाने क्रिया तिष्ठत्येव। नाद्यः सामग्र्याः करणत्व प्रसङ्गात् हस्तादीनामकरणत्वप्रसङ्गात् सुखदुःखादेः प्रमेयस्यापि प्रमाकरणत्वप्रसङ्गाच्च। नच प्रमेयमपि प्रमायाः करणं स्यादेवेति वाच्यं तत्र तथा व्यवहारस्य कस्यचिदप्यसिद्धेः। नापि द्वितीयः

स्पृश्येन सह स्थिरसंयोगस्य स्पर्शनेन्द्रियद्वा-
व्यापनात् तत्सत्त्वेऽपि व्यासक्तौ तेन प्रमानुत्पा-
दनात्। नापि तृतीयः सामग्र्यादेः करणत्व-
प्रसङ्गात् उत्पत्तेः स्थिरे करणत्वप्रसङ्गाच्च।
नापि चतुर्थः सहस्थायिनः करणत्वप्रसङ्गात्।
अथ क्रियया अयोगव्यवच्छेदेन सम्बन्धित्वं
करणत्वमित्यस्यायमर्थः व्यापारवतः फलाव्य-
भिचारित्वमिति। नैवम्। हस्ताद्यव्यापनात्
कश्चायं तद्व्यापारो नाम किं तज्जन्यं कारणम्
उत तदाश्रयं कारणम्। नाद्यः लिङ्गपरामर्शे
तदसम्भवात्। पक्षे प्रथमधूमादिदर्शनस्य
व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शव्यापारं
जनयतः करणत्वमेष्टव्यम्। एवञ्च परमार्थतो-
ऽव्याप्यस्य स्वरूपेण प्रमिति द्वितीयव्याप्ततत्परा-
मर्शव्यापारकानुमानमिष्यत इति चेन्न अन्यतो
जाताग्निधूमादिव्याप्तिस्मृतौ सत्यां पक्षगतप्र-
थमधूमादिदर्शनस्य तद्व्यापारकत्वासिद्धेः तत्रा-
प्युभयकर्मजसंयोगवत्तदपि कारणमिति चेन्न
अभावादिमापेक्षविशिष्टप्रतिपत्तिवत् प्रागुप-
जातशङ्कितव्याप्तधूमस्मृतेः प्रथममपि योऽसौ

वह्निव्याप्तः सोऽयं धूम इति परामर्शोपपत्तेः। नित्यसापेक्षोऽर्थोऽस्तु तथा नान्यत्र प्रथमं तथेति चेन्न प्राक्तकारणोपपत्तौ नान्यदैवमिति नियमे प्रमाणस्याभावात् तस्य व्यापारमात्रान्नानुमित्युत्पादकत्वमेवेति चेत् स्यादप्येवं यदि व्यापारवतः कारणमित्येव सिद्धं स्यात् तत्र धूमादिनिर्व्विकल्पकस्य तद्व्यापारकस्य कारणत्वमिति चेन्न नित्यसङ्घटितार्थवह्निनापि निर्विकल्पकं सविकल्पकोत्पत्तेरविरोधेन त्वदुक्तप्रक्रियानियमे प्रमाणाभावात्। नित्यसङ्घटितेऽपि निर्व्विकल्पकं मंस्यत इति चेन्न कारणान्तरादेव तदुपपत्तौ तत्र निर्व्विकल्पककल्पनायां प्रमाणाभावात् प्रत्युत तत्सङ्घटनस्य स्वभावानतिरेकोपगमात् तथापि यत्किञ्चित्तज्जनकं तदेव तत्रानुमिति करणमास्तामिति चेन्न तथेन्द्रियादेरनुमितिकरणत्वापत्तेरित्यलमतिप्रसरेणेति। शब्द श्रोत्रसन्निकर्षस्य च श्रोत्रव्यापारत्वप्रसङ्गात्। अन्यथा श्रोत्रस्य शब्दप्रतिपत्त्यकरणत्वप्रसङ्गात् सन्निकर्षो हीन्द्रियव्यापार उच्यत इति व्यापारान्तरञ्च तस्य क्षणिकमसिद्धं स्थिरे चोक्तएव

दोषः। शब्द एव तद्व्यापारः किन्न स्यादिति चेन्न तस्य कर्मत्वेन करणकोटिवहिर्भावात्। कथञ्चित्तयोरेकत्वेऽपि का क्षतिरिति चेन्न शब्दबुद्धौ कार्य्यायामुपधायकत्वेन प्रविष्टस्य शब्दस्य करणव्यापारतया करणकोटावपि प्रवेशनेऽन्यतोनियम्यनियामकत्वविरोधापत्तेः। घटादिबुद्धौ चक्षुरादेश्चक्षुर्घटादिसंसर्गव्यापारकत्वेपि समसिद्धमिति चेत् किन्नः स्यात् तथा च "बाधेऽदृष्टेऽन्यसाम्यात् किं दृष्टेऽन्यदपि बाध्यताम्। न ममत्वं मुमुक्षूणामनिर्वचनवादिनाम्। तथा हि मिथिलानाथो मुमुक्षुर्निर्ममः पुरा। आहेदं मिथिलादाहे न मे किञ्चन दह्यत इति।" नापि द्वितीयः लिङ्गपरामर्शस्यानुमितावकरणत्वप्रसङ्गात् निर्विकल्पकस्यापि तस्योपगमे सविकल्पकानाद्य यस्मात् चतत्वाश्वस्य तद्धेतुव्यापारत्वे चात्यापत्ते। किञ्च फलाव्यभिचारित्वं किन्तस्मिन्नेव काले फलसत्त्वनियमः उत तदनन्तरं फलसत्त्वनियमः। नाद्यः कारणस्य पूर्वभावितया [illegible]त्वात्। न द्वितीयः [illegible]-

नन्तर्थ्यं विवक्षितं तदा यत्किञ्चिद्व्यापारवतः करणत्वपक्षे हस्तादेरकरणत्वापत्तेः। आकस्मिकव्यापारवतस्तु तथात्वे कर्त्रादिष्वतिव्याप्तेः। अथ व्यवहितत्वाभावानन्तर्यं विवक्षितं तदापि यत्किञ्चिद्व्यापाराभिप्रायेऽन्तरायसम्भवात् हस्ताद्यव्याप्तिः आफलव्यापाराभिप्राये च व्यवधानासम्भवात् कारकमात्रं करणमित्युक्तं स्यात्। व्यापारवतश्च फलाव्यभिचार इति किन्तद्व्यापारस्य फलाव्यभिचारित्वं व्यापारविशिष्टस्य वा। नाद्यः हस्ताद्यकरणत्वापातात् अतएव न द्वितीयः यागादेः स्वर्गाद्यकरणत्वापाताच्च। अपूर्व्वाख्यार्थत्ववादिनापि चरमयागस्य फलकरणत्वाभ्युपगमादिति। अथोच्यते यद्द्वारेव करोति तत् करणं यद्द्वारेव प्रमिमीते तत् प्रमाणं नैवम् आत्मधर्मप्रध्वंसादीनामकरणानां प्रमाणत्वप्रसङ्गात्। येन क्रियाकारणेन युक्त एव प्रमिमीत इति चेन्न सुखादिप्रमितौ कारणव्यापारस्यापि करणत्वप्रसङ्गात्। चोमिति चेन्न अव्यापारतया प्रमाकरणेन तद्विशेषकारणाभावानुपपत्तेः। व्यापारवदपीति चेन्न

एवं हि व्यापारवत एव करणत्वं न स्यात् न हि व्यापारवतस्तस्य व्यापारान्तरवत्तास्ति। अथ व्यापारवतो व्यापारांशमपहाय करणत्वं तत्र चास्त्येवेदं लक्षणं यस्य करणत्वमस्ति तस्य व्यापारवत्त्वमप्यस्तीति व्यापारवत् करणमुच्यत इति न पटमुद्दिश्य निपात्य च प्रक्षालयतः स्वकर्मैव हि करणं स्यात्। किञ्च किन्तस्य करणत्वमिति लक्ष्यीभूतस्यावश्यवक्तव्यत्वात् यदुक्तलक्षणवत्त्वमेव तत् स्यात् तदात्माश्रयापातः स्यात् स्वरूपमिति चेन्न स्वरूपस्य प्रतिकरणं भिन्नतया एकपरित्यागेनापरत्र लक्षणं गतमित्यतिव्यापकं स्यात्, न हि चक्षुषा स्वरूपं श्रोत्रस्येति। किञ्चैवमिन्द्रियादेः प्रमाणत्वं न स्यात् अतद्वतोऽप्यनुमानादेः प्रमाणत्वात्। नासौ प्रत्यक्षप्रमेति चेन्न नेदमपि हि प्रत्यक्षमात्रस्य लक्षणं भवता क्रियते। ननु यद्यपीन्द्रियादेर्विशेषतो व्यापारस्तदपि तत्कारकत्वमात्रतया तस्याव्यापारत्वमेव। नह्यनुमित्यादावप्यकरणकारीभवान् अभिमीत इति न तया साधारणकारणस्यापि निर्व्यापारत्व-

त्वात्। अथ यां प्रमां यद्वानेव जनयति तस्यां तत्कारणं नैवं कौपीनाच्छादनादेरपि करणत्वप्रसङ्गात्। यज्जातिकामिति चेत् नैवं परोक्षत्वजातिकां प्रमां लिङ्गवानेव शब्दवानेव वा जनयतीति नियमाभावात् तस्या करणत्वप्रसङ्गात् साक्षात्कारित्वानुमितित्वादयोजातिभेदा विवक्षिता इति चेन्न प्रत्येकमुपादानेऽन्याव्याप्तेः समुच्चयोपादाने सर्वाव्याप्तेः अनियमेनोपादाने च लक्षणाननुगमापातादिति। यदभावात् कर्तृकर्मणी क्रियां न जनयतः तत् करणं तेन तदभावात् प्रमातृप्रमेये प्रमां न जनयतः तत्प्रमाणमिति लक्षणमित्यपि न युक्तं किं प्रमातृप्रमेये सती यत्र न जनयतः उतासती अपि। आद्ये अतीतानागतानुमानादिकरणाव्याप्तिः। नापि द्वितीयः प्रमातृप्रमेययोरपि प्रसङ्गात्। यथा हि तत्र चक्षुराद्यभावात् प्रमा न जायते तथा प्रमातृप्रमेयोरप्यभावात् अन्यथा तयोः करणत्वमेव न स्यात्। एतेन सामान्यतोऽभिधानं प्रत्युक्तम् अन्याद्यिकर्तृसापेक्षे कर्तृके चाक्षदादि-

ज्ञाने अस्मदादिकर्तृकरणतापत्तेः। एवञ्च सति प्रकारभेदेनापि प्रमाणप्रमात्रादिव्यवस्था-समर्थना कृता न स्यात् येनैव रूपेण कर्तृत्वादिना तस्य प्रमाणत्वयस्तेनैव तद्व्यतिरेकस्य प्रमानुत्पत्तौ प्रयोजकत्वादिति। चरमव्यापारवत्त्वं करणत्वमित्यपि न व्यापाराभावात् लिङ्गपरामर्शस्याकरणत्वापातात्। नच सविकल्पकव्यापारवतो निर्व्विकल्पकस्य तत्र प्रामाण्यं केवलविकल्पनीयलिङ्गविषये तदनुपपत्तेः। संस्कारादिपर्य्यन्तानुसरणे चानुमितेरजन्यत्वे प्रमाणाभावात् कार्य्यहेतोः कारकाव्यापारत्वात्। अपि चाज्ञातकरणत्वापातात् नच लिङ्गमेव परामर्शव्यापारवत्तया करणमिति युक्तम् अनुमितानुमानादौ परामर्शस्यालिङ्गत्वेन तद्व्यापारत्वानुपपत्तेः। आमोत्यादिभिस्त्वयासीद्धूम इति प्रतीत्य तदा तत्र वह्निरयासीदिति यदनुमानं तत्रासत्त्वात् धूमस्य परामर्शव्यापारवत्तया करणताया दूरनिरस्तत्वात्। किञ्च नाकिञ्चित्करमेतया चरम-व्यापारत्वस्य चरमकारकव्यापारत्वासम्भवाद-

कार्यापेक्षया चरमव्यापारत्वस्य स्वापेक्षया चरमत्वानुपपत्त्या सर्व्वत्रासिद्धेः । कर्मापेक्षयेति चेन्न कर्तृधर्मिमात्रापेक्षया विवक्षितत्वे कर्त्तरि प्रसङ्गतादवस्थ्यात् । व्यापारवत्कर्मपेक्षाभिप्राये च कर्त्तरि स एव प्रसङ्गः । एकव्यापारवत्कर्मापेक्षया परापरकर्तृव्यापारस्य चरमभावित्वात् । यावद्व्यापारवत्कर्मपेक्षापक्षे तु विवक्षितमपि करणं न स्यात् आफलसिद्धेः कर्तृव्यापाराविरामात् । व्यापारस्य विच्छेदे तद्धेतुत्वलक्षणक्षीणतापत्तेः । यद्व्यापारानन्तरं कारकान्तरं न व्याप्रियते चरमव्यापारमिष्टमिति चेन्न सेश्वरपक्षे कर्तृव्यापाराविरमात् तदानन्तर्य्यासिद्धेस्तत्करणत्वापातात् । अनीश्वरपक्षे चाद्युपयोगादिभिरेव सव्यापारकर्म्मण्यपि प्रसङ्गात् छेद्यादे हि करणसंयोगादिभिरेव सव्यापारे कर्म्मण्यपि प्रसङ्गात् । छेद्यादे हि करणसंयोगादिव्यापारश्चरम एवेति कुतस्तद्ववच्छेदः हस्ताद्यव्याप्तेश्चेति । अनन्तरफलं करणमित्यपि न अविशेषितानन्तर्यस्य सर्व्वकारणसाधारण्यात् अव्यवहितानन्तर्य्यस्य

व्यापार्य्यपेक्षया यागाद्यव्यापनात्। व्यापारा-पेक्षस्य च हस्ताद्यव्यापनात् व्यापारपरम्परा-पेक्षस्य सर्व्वकारकव्यापनात्। किञ्च तत्कार्य्यो-यदि क्रियाहेतुस्तद्व्यापार इष्टस्तदेन्द्रियकार्य्यो-लिङ्गपरामर्शोऽनुमिति क्रियाहेतुरितोन्द्रिय-करणिकानुमितिः प्राप्ता। अथ हेतोः सतः कार्य्यः क्रियाहेतुस्तद्व्यापारस्तथा सत्यनुमित्य-हेतोरिन्द्रियस्य कुतः करणत्वं स्यादिति। नैवम्। किं तद्धेतुत्वं यन्नास्त्यनुमिताविन्द्रि-यस्य नियतपूर्व्वभावित्वमिति चेत् अस्ति तावत् पूर्व्वभावित्वं नियतत्वमपि यदि कारणतायां प्रयोजकमिच्छसि तदा भवतैव प्रतितव्यं केन-चिद्रूपेणेन्द्रियादेर्नियतत्वं प्रति अन्यथा लिङ्गे-न्द्रियादेः परस्परव्यभिचारादकरणकैव प्रमा स्यात्। मनःसंयोगादेरेव तथात्वे च प्रमा साधारण्यम् अपि चाक्षादेरकरणत्वापातः। यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषस्यैव तद्विशेषप्रयोजकत्वनियमदर्शनात् ततो येन केनापि रूपेणेन्द्रियस्य प्रमायां नियतत्वमुप-गते तेनैव रूपेण प्रसङ्गोपपत्तिः। अथ

प्रमात्वे तत् प्रयोजकं नत्वनुमितित्वादाविति चेन्न निरुपाधित्वाविशेषेणोक्तार्थानाधिक्यात् सामान्यप्रयोजकत्वेन विशेष त्यागानवकाशा-दिति अन्यथा व्यक्तेरकारणकत्वापत्तेः। अथा-न्यवास्तु यद्वा तद्वा करणं प्रमाविवक्षितजाति-विशेषव्यपदेशकं प्रमाणं चतस्रः खल्विमाः प्रत्यक्षादिप्रमितयो भिन्नव्यपदेशभाजः। नच प्रमाता प्रमेयं वा तद्भेदहेतुः प्रमाणानि तु यथा-यथं चतसृषु साधारणानीति भिन्नबुद्धिव्यप-देशनिबन्धनानीति। मैवम्। विवक्षितपदं तावल्लक्षणे भगडालेख्यमिव पुरुषेच्छानाम-नियतविषयत्वात्। अर्थजत्वस्य च साक्षात्-कारित्वं प्रतीन्द्रियजत्वाविशिष्टतयार्थस्यापि करणत्वप्रसङ्गात्। आप्तोक्तौ तु कर्त्तुरपि शाब्द-प्रमाजातिविशेषकत्वेनातिप्रसङ्गात् ओमित्यु-त्तरे च पूर्व्वमेवोक्तमिति विवक्षितजातिभेदोप-यिकत्वेन प्रमित्यसमवायिकारणविशेषकं प्रमाण-मित्यप्यत एव प्रत्युक्तमिति प्रमाकरणनिरुक्ति-दूषणानि।

एवं विशेषतोऽपि प्रमाणलक्षणानि प्रतिव्याख्यानि तथा हि प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीत्याहुः। किमर्थमिदमुच्यते किं सजातीयविजातीयव्यवच्छिन्नतत्प्रतीत्यर्थम् उत साक्षात्कारित्वप्रतीतये तद्विद्योपदर्शनमिदम् उत व्यवहारार्थम् उत प्रत्यक्षादि शब्दप्रवृत्तिनिमित्तावधारणार्थम् उताऽन्यत्किञ्चिदर्थमेव। तत्र नाद्यः। तथा हि किं सजातीये हि प्रत्यक्षत्वेन साजात्यमपेक्षितं रूपान्तरेण वा। नाद्यः तस्माद्व्यवच्छेदावधेः सजातीयादव्यावृत्तत्वेन व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तत्वस्वीकारेणाव्यापकत्वात्। नापि द्वितीयः विजातीयपदोपादानवैयर्थ्यात् अस्ति हि प्रमेयत्वादिना सर्व्वसाजात्यम्। अथ प्रमाणत्वादिना विशेषेण साजात्यं विवक्षित्वेदमुच्यते तर्हि लक्ष्यस्यापि प्रमाणत्वे न साजात्याद्व्यवच्छेद्यकोटिप्रविष्टतया संग्राह्याभावप्रसङ्गः लक्ष्यस्य यत्प्रमाणत्वादिभिः सजातीयं तद्व्यवच्छेद्यम् न च लक्ष्यस्य स्वं सजातीयं प्रष्टार्थस्य भेदव्यवस्थितत्वादिति चेत् एवं तर्हि लक्ष्यापेक्षया

भिन्नात् व्यवच्छेद इत्येषोच्यतां कृतं प्रमाणत्वादिना साजात्येन प्रकृतानुयोगिना वर्णितेन। यदा च लक्ष्यादन्यत्वं परेषामवगतं तदा परस्मादन्यत्वमपि लक्ष्यस्यार्थादवगम्यत इति सिद्धमग्रतएव लक्षणप्रयोजनमिति वैयर्थ्यमेव स्याल्लक्षणाख्यानस्येति। अस्तु वा विवक्षावैचित्र्यवशात् कथमपीदृशमभिधानं तथापि न तावदनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसम्भवोऽतिप्रसङ्गात्। नापि ज्ञातेन दुरवधारणत्वात् तथा हि न तावदिन्द्रियार्थसन्निकर्षोत्पत्तिः प्रत्यक्षाप्रत्यक्षविशेषणात् नापि कार्य्येण लिङ्गेन तदनुपपत्त्या वा तदवगमः ताभ्यां सामान्यतः कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धावेकरूपलक्षणासिद्धेः कार्य्यस्यैकजात्यादेकजातीयकारणसिद्धिरिति चेत् तर्हि कार्य्यगतैकजात्यस्य पूर्व्वमवश्यप्रत्येतव्यत्वाङ्गीकारे ततएव सजातीयविजातीयव्यवच्छेदप्रतिपत्तिरस्तु कृतमनया पारम्पर्य्यं कुसृष्ट्या। तन्वेतावतापि न प्रकृतलक्षणखण्डनं भवत्यव्याप्तेरव्याप्तेर्वानुद्भावनात्। मैवम्। प्रथम-

भावितयावश्यानुष्ठेयतया च लघोरुपायात्साध्य-
सिद्धौ सम्भवन्त्याम्न्तरमभावितयावश्यानुष्ठेय-
त्वाभावेन च गुरूपाये प्रवर्त्तमानस्य तवैवेदं
दोषोद्भावनं प्रदीपे प्रदीपान्तरं प्रज्वाल्य
तमोनिरासाय यतमानस्येव पुंसः। न हि
तस्य दीपान्तरस्य कश्चिद्दीपदोषः किन्तु तथा-
कारी पुरुष एव पर्य्यनुयोज्यः सर्व्वसाधनसाधा-
रणोऽयं वा दोषो यत्सम्भवदेवंविधलघूपायत्वं
नाम स्वरूपासिद्धिरिव सर्व्वप्रमाणानां त-
स्मान्मा नाम भूदतिव्याप्त्यादिदोषः सामान्य-
दोषादेवेदं दुष्टं लक्षणमिति। एतेन द्वितीयो-
ऽपि निरस्तः साक्षात्कारित्वावगममन्तरेण त-
दवगमानुपपत्तेः तदवगमाच्चास्य प्रतीतावन्यो-
न्याश्रयप्रसङ्गः। अस्तु वान्यदपि किञ्चिदिन्द्रि-
यजत्वे लिङ्गं तथापि तदेव साक्षात्कारित्वा-
विनाभूततया प्रत्यक्षलक्षणमुपन्यस्यतां सन्नि-
हितप्रतिपत्तिकत्वात्। नच तदवश्यं व्यापकं
वक्तव्यं लिङ्गत्वस्य तद्व्याप्यत्वेनैवोपपत्तेरिति चेन्न
यत लिङ्गमव्यापकत्वान्नास्ति तत्रैन्द्रियजत्वस्य
प्रमाणाभावात् प्रत्येतुमशक्यत्वेन कथं ततः

साक्षात्कारित्वावगमः यदा च क्वचित्तज्जातीय एव प्रमाणाभावादिन्द्रियजत्वमनवधारणीय तथा साक्षात्कारित्वव्यापकतानवगतमपि लक्षणं तदा किमपराद्धं लिङ्गान्तरेणाव्यापकेन। अथ यत्रेन्द्रियजत्वे तल्लिङ्गं नास्ति तत्र लिङ्गान्तरात्तत्प्रत्येतव्यं तथापि तदेवास्तां साक्षात्कारित्वे लिङ्गं कृतमिन्द्रियजत्वानुमानपूर्वक तदनुमानकल्पनया। अथ तथा लिङ्गद्वयं तत् प्रत्येकमव्यापकतया न लक्षणम् इन्द्रियजत्वन्तु तथा स्यात् लक्षणमिति चेन्न साक्षात्कारित्वानुमानस्य लक्षणप्रयोजनस्योभाभ्यामेव सिद्धेः कृतं व्यापकेन तेन। नापि द्वितीयः स ह्येवं ब्रूमो यदिन्द्रियार्थसन्निकर्षजादि तत्प्रत्यक्षमिति व्यवहर्त्तव्यमिति। अयमप्यनुपपन्नो लक्षणस्य ज्ञातुमशक्यत्वात् साक्षात्कारित्वात्तदवगमे साक्षात्कारित्वमेवास्तु व्यवहारनियमव्यवस्थितप्रतिपत्तिकत्वादित्यावेदितम् अतएव न चतुर्थः कल्पनागौरवदोषस्याधिकः। नापि पञ्चमः तादृशस्य दर्शयितुमशक्यत्वात् एतेन भासमानाकारेन्द्रियसंयोगजं प्रत्यक्षमित्यपि

निरस्तम्। किञ्च प्रमाणविशेषलक्षणमिदं प्रमाणलक्षणोपसंगृहीतस्य कियतः संग्राहकं कियतश्च प्रतिक्षेपकं वक्तव्यं प्रमाणलक्षणेन च व्यभिचारिणोनिवृत्तिः प्रदर्श्यते तथा च सति यथाश्रुतमिदमलक्षणं व्यभिचार्य्यपि भासमानस्य सत्तादेराकारस्येन्द्रियसंयोगादुत्पद्यते। अथ विशेषाभिप्रायेणेदं लक्षणवाक्यं तताप्यसङ्गतिः तथा हि किं कियन्मात्रभासमानेन्द्रिययोगजत्वं विवक्षितम् उत यावद्भासमानेन्द्रिययोगजत्वम्। आद्ये व्यभिचार्य्यव्यवच्छेदः निर्विकल्पकासंग्रहश्च। नापि द्वितीयः विकल्पासहत्वात् तथा हि किम्भासमानता विशिष्टस्येन्द्रियसंयोगः उत भासमानोपलक्षितस्य। नाद्यः पूर्वं भासमानत्वाभावात् कारणस्य च पूर्व्वभावित्वात् द्वितीये लटोऽविवक्षितार्थत्वं विवक्षितार्थत्वं वा। नाद्यः तथा हि यावद्भासमानाकारेन्द्रियसंयोगजमपि भवति घटोऽयमिति विज्ञानं न च तदात्मनि प्रत्यक्षम् आत्मनस्तदीयाविषयत्वात् प्रामाण्यस्य च विषयनिष्ठत्वात्। एवं प्रामाण्यं यस्य विषये तद्विषे-

घस्य प्रत्यक्षत्वस्य वक्तव्यत्वात् अन्यथा पटादित्वे घटोऽयमिति प्रत्यक्षं प्रमाणमतः किमुत्तरम् । नन्विदमुत्तरं घटविज्ञानं पटे न प्रत्यक्षम् । न हि तत्तदिन्द्रियसन्निकर्षेणोत्पन्नमिति तत् किमात्मेन्द्रियसन्निकर्षजं घटज्ञानमात्मनि प्रत्यक्षमेव कथमेवं स्यादात्मेन्द्रियसन्निकर्षाद्घटज्ञानस्योत्पादेऽप्यात्मनोऽनवभासमानत्वादिति चेन्न भासमानेत्यत्र लटोऽविवक्षितार्थत्वपक्षमाश्रित्येदं भवतोच्यत इति स्मर्त्तव्यम् । अस्ति ह्यात्मनोभासमानत्वं कदाचित् केनचिदन्यथा अप्रमेयत्वप्रसङ्गात् उक्तलक्षणकं स्वविषये प्रत्यक्षं न त्वन्यत्रापीति चेन्न स्वशब्देन यदि ज्ञानमात्रं विवक्षितं तदा स दोष स्तदवस्थः । अथ ज्ञानव्यक्तिरपेक्षिता तदा लक्ष्यस्वरूपस्यासाधारणतया तत्परित्यागेन लक्षणस्यान्यत्र सत्वादतिव्याप्तिः व्यक्त्यन्तरस्य लक्षणासमस्त एकव्यक्त्यभिहितलक्ष्यीभूतासाधारणरूपत्वाभावात् । व्यक्त्यन्तरमपि लक्ष्यमेव अलक्ष्ये न लक्षणस्य गमनादतिव्याप्तिरिति चेन्न यदेक न असाधारणरूपं लक्ष्यत्वेन निरूप्यते भवता

न तदन्यस्वरूपमतः कथं तदपि लक्ष्यमित्यपि शब्देनानेकं साधारणीकृत्य समुच्छेत्तुं शक्यम्। यदपि साधारणं रूपम् एतद्व्यक्त्यन्तरव्यवच्छेदकं स्वविषयपदं विशेषणं प्रक्षिपता भवतैवासाधारणीकृतं स्वशब्दस्य ज्ञानमात्रार्थत्वे दोषस्योक्तत्वात् स्वत्वस्य चानुगतस्य रूपस्य निर्वक्तुमशक्यत्वात्। अन्य व्यक्तिविषयस्यान्यत्र तथात्वापत्तेः। नापि द्वितीयः पक्षः विकल्पासहत्वात् किं सम्प्रयोगापेक्षया वर्त्तमानत्वमथ यत् किञ्चिदपेक्षया। प्रथमे विशेषणत्वपक्षान्न विशेष इत्युक्तदोषापत्तिः। द्वितीये तु लटोऽविवक्षितार्थत्वमेव स्यात् व्यवच्छेद्ययोर्भासितभासिष्यमाणयोरपि तदा भासमानत्वस्वीकारात्। इन्द्रियसंयोगानन्तरं भासमानत्वमपेक्षितमतोऽविवक्षितार्थमिति चेन्न आत्मनोऽपीन्द्रियसंयोगानन्तरं भासमानत्वमस्ति। न हि पक्षः स यदा मनसा गृह्यते तदा नेन्द्रियसंयोगानन्तरं नेन्द्रियसंयोगमात्रं विवक्षितं किं नाम यदनन्तरं भासनोत्पत्तिरिति चेन्न तदनन्तरमपि भासनोत्पत्तेः। भासनान्तरं तत्र न त्विदं

भासनमिति चेन्न अव्याप्तिप्रसङ्गात् एकभासनमात्रव्यवस्थितत्वात् लक्षणस्य। अथ मन्यसे यद्भासनं यस्य विषयस्येन्द्रियसंयोगादुत्पन्नं तत् तत्र प्रत्यक्षं प्रमाणमिति निरुक्तौ नच दोष इति। नैवम्। यद्भासनं घटोऽयमिति यस्य विषयस्यात्मन इन्द्रियेण सह सन्निकर्षादुत्पन्नं तद्भासनं तस्मिन्नात्मनि प्रमाणं स्यात् नात्मा तस्य विषयः तत् कथमेवं स्यादिति चेन्न न हि भवता तदीयविषयस्येत्युक्तं किन्तु सामान्यतो विषयस्येति तेनेदमभिहितं यदि तु तदीयतां विशेषणमुपादत्ते भवान् तदा यदि यच्छब्देन ज्ञानजातीयमात्रपरामर्शस्तदा स दोषस्तदवस्थः। यदि तु ज्ञानव्यक्तिविशेषपरामर्शस्तदा अव्यापकत्वं प्रतिज्ञानं तच्छब्दार्थस्य भेदात् न हि यत्त्वं तत्त्वं वा किञ्चिदनुगतं रूपमस्ति अतएवात्मविषयत्वानुयोगवत् त्रिपुटीप्रत्यक्षवादिन्यपि पटज्ञानस्य घटादौ प्रत्यक्षतया प्रामाण्यानुयोगो द्रष्टव्यः। यदिन्द्रिय सन्निकर्षोत्पन्नमिति विशेषणप्रक्षेपे यत्तच्छब्दार्थस्यासाधारण्यादव्याप्त्यापत्तेः। यदि तु यत्तच्छब्दार्थो-

ऽनुगतः स्यात् पुनरप्यन्वत्र घटोऽयमिति ज्ञानस्य प्रत्यक्षत्वेन प्रमाणता प्रसज्येत। अथात्मव्यतिरिक्त इति विशेषणं प्रक्षिपसि तदा आत्मविषयस्य प्रत्यक्षता न स्यात् तच्छब्देनानुगतार्थाभिधाने व्यवच्छेदकत्वाभावात् घटज्ञानस्य च पटे प्रत्यक्षतया प्रामाण्यं प्रसज्येत। एतेनेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्यक्षमित्यत्रापि दोषोऽयमुक्तो द्रष्टव्यः तादृशस्यापि ज्ञानस्य विषयान्तरे प्रत्यक्षत्वेन प्रामाण्यप्रसङ्गात् यस्यार्थस्य सन्निकर्षात् यदुत्पद्यते ज्ञानं तत्तत्र प्रत्यक्षतया प्रमाणमित्यभिधाने तु यच्छब्दतच्छब्दसाधारणासाधारणार्थाभिधानविकल्पोक्तदोषप्रसङ्गः अव्यभिचारिपदञ्च व्यर्थम्। न हि शुक्तौ रजतज्ञानं रजतेन्द्रियसन्निकर्षादुत्पन्नं संस्कारलक्षणा प्रत्यासत्ती रजतत्वेऽप्यस्तीति चेन्न पूर्व्वानुभूतरजततादात्म्यसंस्काराभावादुक्तदोषतादवस्थ्यात् गुरुमतानुसारेण सुतरां विशेषणवैयर्थ्यात्तेन व्यभिचारानङ्गीकारात्। रजतत्ववैशिष्ट्ये पुरोवर्त्तिनि तदभावात् तस्मिन्नेवांशेऽप्रामाण्यं न तु

रजतत्वमात्रे तस्यान्यत्र सत्त्वात् । अथ साक्षात्कारित्वं प्रत्यक्षलक्षणमुच्यते तदा साक्षात्कारिभ्रमेऽपि प्रसङ्गः अव्यभिचारित्वेन विशेषितं तल्लक्षणमिति वा भेदाग्रहव्यतिरिक्तविभ्रमाभावो वेति चेन्न विकल्पासहत्वात् । किमवगतमिदं लक्षणं फलहेतुः अनवगतं वा । न तावच्चरमः तदभिधानवैयर्थ्यप्रसङ्गात् । अभिधानस्य ज्ञानोत्पादोपयोगित्वात् तस्य चानवगतस्यैव फलसाधकत्वाभ्युपगमात् । आद्ये किमन्यस्मात्तदवगमः उत त्वदीयाल्लक्षणवाक्यात् यद्यन्यायात् कृतममुना लक्षणाभिधानप्रयासेन अभिधानस्य ज्ञानोत्पादातिरिक्तप्रयोजनाभावात् तस्य चान्यतएव सिद्धेः । अन्त्ये किमिदं त्वदभिधानमाप्तोपदेशतया साक्षात्कारित्वं बोधयति उत लिङ्गादिभावेन । न तावच्चरमः त्वद्वचन साक्षात्कारित्वाविनाभावादेर्दर्शयितुमशक्यत्वात् नापि प्रथमः वादिनं प्रति भवत आप्तत्वासिद्धेः सिद्धौ हि प्रतिज्ञामात्रादेव साध्यसिद्धौ हेत्वाद्यभिधानमनर्थकं स्यात् । अथ मन्यसे यः साक्षात्कारित्व

मन्यतो जानाति प्रत्यक्षव्यवहारनिदानतया च न जानाति तं प्रति प्रत्यक्षव्यवहारनिदानत्वमस्य ज्ञाप्यते लक्षणवादिना तच्चानुमानभावे नैवानाप्तोपदेशतया। अतएव लक्षणं केवलव्यतिरेक्यनुमानमाचक्ष्महे यद्यथा श्राव-णादिप्रमितयः साक्षात्कारिप्रमितयो वा प्रत्यक्षत्वेन व्यवहर्त्तव्याः साक्षात्कारिप्रमितित्वात् न यत्प्रत्यक्षतया व्यवह्रियते न तत्साक्षात्कारिप्रमितिः यथानुमितिः तथाचैता स्तस्मात्तथा एतदनुमानप्रतिपादकञ्च वाक्यं नाप्तवाक्यत्वेन प्रयुज्यते वादिना किन्तु व्याप्त्यादेः प्रतिपन्नस्यैव स्मारकं पूर्व्वाप्रतिपन्नस्य वा जिज्ञासोत्पादन द्वारेणेदानीमेव वादिनि प्रमाणोत्पादकमित्युक्तदोषानवकाश इति न प्रत्यक्षतया व्यवहर्त्तव्या इति व्यवहारस्य किं विषयभेदो विशेषः उत शब्दभेदः। आद्ये यद्यसौ विषयविशिष्टं तं व्यवहारं नाज्ञासीत्कथं साक्षात्कारिणि तस्य स्वकर्त्तव्यतां लक्षणवाक्यादप्यवगच्छेत् नह्यविदिताग्निरनुमानादग्निसम्बन्धो बोधयितुं शक्यः। अथाज्ञासीत् तदा ज्ञात-

ज्ञापनवैयर्थ्याल्लक्षणरूपमनुमानं निष्प्रयो-जनम्। अथ सामान्यतो जानाति अस्ति कश्चि-द्विषयः प्रत्यक्षव्यवहारस्येति विशेषतस्तु न जानाति तं प्रतीदमुच्यते न किं सामान्यतो निमित्तवत्तां व्यवहारमात्रस्य जानाति उत व्यवहारविशेषस्य। आद्ये प्रकृतानुपयोगः व्यवहारविशेषस्य चिन्त्यमानत्वात् द्वितीये किं कृतोऽसौ व्यवहारस्य विशेष इति विकल्पित पक्षानुप्रवेशमन्तरेण न निस्तारः। एतेन सर्व्वस्यैव लक्ष्यस्य स्वीकारः परासनीयः। तथा हि "नाव्यापत्ता प्रमा मातार्वोतेऽर्थाः स्वीक्रि-योचिताः। तद्विय स्तदुरीकारे स्वाश्रयं कश्चि-कित्ततु। अथान्यः सविशेषश्चेत् तद्धीत्वं कैश्चि-दिष्यते। दत्तः साकारवादाय विष्टरः स्पष्ट-मेव तत्। अर्थादर्थास्तवो धर्मानानुमात्वादयो यथा। तद्धीत्वमपि तद्दत्त्यादित्यर्थोऽनर्थमावि-शेत्। सोऽपि वा धी विशेषः किं स्वीकार्य्य स्तद्धियं विना। एवञ्च सोऽपि सोऽपीति नान्तः

व्यवहारयोः। उपपादयितुं तैस्तैर्मतैरशक्नीय योः। अनिर्व्वक्तव्यतावादपादमेवागतिस्तयोः।,,

नापि द्वितीयः। तथा हि अयमनुमानार्थः स्यात् श्रावणादि प्रतिपत्तयः प्रत्यक्षशब्दाभिधेयाः साक्षात्कारित्वादित्यादि सोऽपि न यद्यसाक्षात्कारिण्यनुमानादौ तच्छब्दाप्रयोगमात्रात्साक्षात्कारिणि तच्छब्दप्रयोगः क्रियते तर्हि शशविषाणजरगडदशादिशब्दप्रयोगोऽपि साक्षात्कारिणि कर्त्तव्य एवाविशेषात्। अथ जरगडदशादिशब्दाः सामान्यतोऽर्थवत्तया न प्रसिद्धाः क्वचिदप्यप्रयोगात् शशविषाणादि शब्दाश्चासद्विषया एवेति सिद्धाः प्रत्यक्षादिशब्दास्तु सद्विषयवत्तया सामान्यतः सिद्धाः प्रत्यक्षमस्तीत्यादिप्रयोगदर्शनादित्यस्ति विशेष इति चेत्। नैवम् एतेनापि विशेषेण चाक्षुपादिशब्दानामव्यवच्छेदात् तेषामपि साक्षात्कारिमात्रे प्रयोगप्रसङ्गः। साक्षात्कारित्वे सत्यपि श्रावणादौ चाक्षुषादिशब्दानामप्रयोगो नत्वेवं प्रत्यक्षादिशब्दानामिति विशेष इति

चेत्। एवं तर्हि यत्र साक्षात्कारित्वं नास्ति तत्र प्रत्यक्षशब्दयोगो नास्ति यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रास्तीति यो जानीते तं प्रति लक्षणाभिधानमिति स्यात् स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थं लक्षणम्। एतेनानुमित्यादि व्यवच्छिन्नतया व्यवहर्त्तव्यमित्यप्युक्तानुमानसाध्यतयाभिधानमपास्तं वेदितव्यं पूर्व्वप्रतिपन्नमेव वाच्यवाचकभावं लक्षणाभिधानेन स्मर्य्यत इति चेन्न अवगतमयस्य प्रत्यक्षशब्दादेव तत् स्मरणसम्भवात् व्यर्थता लक्षणाभिधानस्य स्यात् अवगतशब्दार्थसम्बन्धः शब्दादेव स्मरन् यदि लक्षणेन स्मार्य्यते तदा लक्षण वाक्यगत पदकदम्बार्थस्मरणार्थमपि तल्लक्षणमभिधानीयमविशेषादेवं तल्लक्षणवाक्येऽपीत्यपर्य्यवसानं स्यात्। ननु प्रतिवादिनं प्रति लक्षणाभिधानं नार्थवत् तेन वाद्याप्तभावानङ्गीकारात् किन्तु शिष्यार्थं लक्षणमुच्यते शास्त्रे स हि शास्त्रस्य कर्त्तारमाप्तमेव मन्यते तस्मात् शिष्यं प्रत्याप्तवचनतयैव लक्षणवाक्य-

मर्थं प्रतिपादयिष्यति गुरुणा गीयमानम्। य स्त्वया शास्त्रकारिशब्दार्थः प्रतीतः स एव प्रत्यक्षशब्दार्थ इति। नैवं यदि वादिनं प्रति न शास्त्रं किन्तु शिष्यं प्रति तदा प्रतिज्ञासाध्याद्येवाभिवचनात् शिष्यस्यार्थनिश्चयोत्पत्तेः हेत्वाद्यभिधानमनर्थकमापन्नं शास्त्रे। अथ भवतु तत्प्रतिवादिनमपि प्रति शास्त्रे वाक्यं यत्र हेत्वाद्युपात्तं लक्षणवाक्यन्तु शिष्यमेव प्रति प्रयोजकं प्रतिपन्नशास्त्रकाराप्तभावमिति मन्यसे तदाप्यनुपपन्नं शास्त्रान्तरसाध्यत्वादस्यार्थस्य। अस्ति समयग्राहकं शास्त्रं मुनिभिः प्रणीतं नामलिङ्गानुशासनव्याकरणादि। यदि च शास्त्रान्तरसाध्योऽप्यर्थो भवदीयशास्त्रस्य विषय स्तर्हि प्रकृतिप्रत्ययविभागो न साधनमपि शब्दानां कुतो न व्युत्पाद्यते लिङ्गं वा शब्दानां कुतो नाभिधीयते तदज्ञानेऽपि पराजयो जायतएव। अथवास्तु व्याकरणादिविषयं विहाय नामव्युत्पादनं बाधमपि भवच्छास्त्रस्य विषयः। तथापि न्यूनतरत्वमस्मिन् विषये भवदीयशास्त्रस्य बहूनि नामानि विवक्ते कोषान्तरवर्त्तिनी

कुतो न व्युत्पादितानि तानीति । अथास्मिन् शास्त्रे येषां शब्दानामुपयोग स्तेषामनेन व्युत्पादनं न सर्व्वेषामित्युच्यते तथापि यथैकवाक्यगतस्य पदस्य लक्षणव्युत्पादनमेवं तल्लक्षणवाक्यगतपदस्यापीत्यपर्य्यवसानमापतितं शास्त्रस्य तत्तल्लक्षणवाक्यप्रयोग एव तेषां तेषां पदानां शास्त्रे जातोपयोगत्वात् । अथ नानालक्षणप्रणेतृणां वादिनां विप्रतिपत्तेः प्रत्यक्षादिशब्दार्थ एव व्युत्पाद्यते संशयनिरासाय नान्योऽसंशयत्वादिति मन्यसे तथाप्यनुपपत्तिः अस्ति हि वादिनामर्थे वाच्यताद्योत्यताविवादः अस्ति च छिद्रादिपदानामर्थे कर्मकर्तृत्वाकर्मकर्तृत्वे विवादः अस्ति च भाव शब्दस्य स्वरूपसत्त्वसत्तासामान्याद्यर्थत्वे अस्ति चाधिकरणशब्दार्थस्य पतनप्रतिबन्धकत्वसमवायित्वादौ । एवमन्यस्मिन्नपि बहौ पदार्थे जाग्रति विप्रतिपत्तय स्तल्लक्षणानि कस्मान्नोक्तानि तदास्तामेकत्र विस्तराभिनिवेशः । किञ्च किं

।प्त्यात्क

चेन्न सविशेषत्वस्योपलब्धत्वात्वेऽनुमानादि-

व्याप्तिः विशेषणत्वे च यदि विशेषणदृष्टतायां विश्रान्तिस्तदाशेषविशेषस्य बोधे प्रत्यक्षतच्छया क्षीणत्वेनाप्रत्यक्षतापातः यद्यविश्रान्तिस्तदा तादृशस्यैव व्याप्तिः ग्रहादनुमायामपि तादृशसिद्धिरिति साक्षात्कारित्वापत्तिः। अथानुगमात्तत्र न तदनुमा तर्हि तदनुगतप्रतीत्याद्यनुपपत्तिः व्यक्तेरनुमानादसिद्ध्यापत्तिश्च। यथा हि व्यक्तिं विना सामान्यस्य तथा तावत् तं विशेषं विना व्यक्तेरप्यनुपपत्तावविशेषात् यदि च प्रतीत्यपर्य्यवसानाभावात्पक्षधर्मतया नानन्तविशेषसिद्धिरिति मन्यसे तदा प्रतीतापर्य्यवसानात्तद्बुद्धिः साक्षात्प्रकाशः स्यात्। अप्रतिपद्यमानानन्तविशेष प्रकाशकल्पनाश्चैकाकिसाक्षात्त्वनामकविशेषकल्पत्वात् श्रेयसितरा साक्षात्त्वव्यवहारान्यथानुपपत्तेः कल्पनाबीजस्य तावतापि चरितार्थत्वादिति कृत्वा तत् कल्पनादिनातएव विस्तरस्तत्र वक्ष्यते विशेषस्य यदि व्यवच्छेदस्तदा निर्व्विकल्पकाव्याप्तिः। यदि च विम्बव्यावृत्तस्वरूप प्रकाशात् सोऽपि तथा तदा दूरे सामान्यप्रत्यक्षस्याप्रत्यक्षत्वापातः

तत्र जगद्वैलक्षण्यप्रकाशे संशयाद्यनुपपत्तेः यदि तत्रापि प्रतिपक्षादिव्यवच्छेदमात्रप्रकाशाद्विशेषप्रकाशत्वमेव तदानुमित्यादिव्याप्तिः। अथ इन्द्रियकरणकानुभूतित्वं तत्र साक्षात्कारिधीकरणस्येवेन्द्रियत्वेनान्यो ऽन्याश्रयत्वापत्तेरिति केचित् तत्र अज्ञातप्रमाकरणत्वस्य भावत्व विशेषितस्येन्द्रियनिरुक्तौ सम्भवात् विना कार्य्यगतविशेषसिद्धिं किं प्रति करणत्वमेव ज्ञेयमिति तु बाधः साधीयान्। एतेन ज्ञातता काचिद्विलक्षणा तज्जनकत्वं ज्ञानस्य साक्षात्त्वमिति निरस्तम् एकरूपाव्यवस्थितौ कारणत्वानवधारणात्। नच ज्ञाततावैलक्षण्यान्यथानुपपत्तेरेव तत्सिद्धिः कारणान्तरवैलक्षण्यादेव तदुपपत्तेः। नापि मेयजनितत्वमतिप्रसङ्गात्। स्वमेयजत्वे च स्वार्थव्यावृत्त्याननुगमात् पूर्व्वदोषानिवृत्तेश्च। अथ येन प्रमिते सति न प्रमित्सा पुनर्भवति तज्ज्ञानं साक्षात्कारीति तन्न प्रत्यक्षावगतेऽपीष्टे तन्नवादौ प्रमित्सादर्शनात्। अथ यदनन्तरं न विजातीयप्रमित्सा तद्वाव स्तथात्वं तन्न तत्साक्षात्त्वानवगतौ

तद्विजातीयानवगतेः अविसम्वाद्यनुमादिविष-
यायां प्रत्यक्षयितुमनिष्टेश्च। प्रत्यक्षावगतेऽपि
दहने रक्ताशोकस्तवकसन्देहे धूमदर्शनेन वह्ने-
रनुमीयमानत्वादित्यप्येके। अज्ञायमानासाधा-
रण कारणकानुभवत्वं कारणविशेषणीकृत-
भावत्वं वा साक्षात्कारित्वमिति चेन्न दीर्घादि-
प्रत्यक्षाव्यापनात् तत्रावधिप्रसृतेः प्रतीयमान-
स्यापेक्षणात्। नावधिस्तत्र ज्ञायमान स्तथा
अवधिज्ञानं तु स्यात् अतीतादाववधौ तथा-
प्रत्ययादिति चेत् तुल्यं लिङ्गे धूमादावपि धूम-
दर्शनात्तत्राग्निरासीदिति पश्चादप्यनुमानात्
ज्ञानविशेषणतया ज्ञेयहेतुता तुल्यैवेति। असा-
धारणकारणगिरा करणमभिमतमिति चेन्न

लिङ्गस्य करणत्वासम्भावेन ज्ञायमानकरणक-
त्वाभावात्। लिङ्गज्ञानं तावत्कारणं यत्र स्व-
प्रकाशवादिनो मम ज्ञायमानमेव तत्रेति चेन्न
तस्यापि ज्ञायमानतया करणकोटिप्रवेशे
प्रमाणाभावात् उक्तप्रत्ययानां तथात्वाभावात्।
अन्यथासिद्धस्यापि ज्ञायमानत्वस्यावर्जने चक्षु-

राद्यनुमित्यनन्तरं दैवोपजातघटादिप्रत्यक्षा-व्यापनात् नियमेनेति चेन्न विधौ वैयर्थ्यात्। नियमेनेति निषेधस्य विशेषणे दैवागतेन्द्रिय-ज्ञानानन्तरजप्रत्यक्षसम्भवादसिद्धिः। विधौ कारणप्रविष्ट एवायं नियमो निरुच्यत इति चेन्न तथापि वैयर्थ्यादेव। अन्यथातिप्रसक्तेर-वैयर्थ्यमिति चेन्न तथाप्यतिप्रसक्तेरेव न हि रसादिसाक्षात्कारे रूपादिर्हेतुः। अन्यथा-सिद्धेर्नेति चेन्न तुल्यत्वात्। किञ्च यत्र निषेधः तद्गतमैकरूप्यं निरूप्यमन्यथा किमादाय नि-यमो निरूप्य इति कार्य्यगतैकरूप्यमनभि-धाय न निस्तारः। विनापि च नियमपदप्र-वेशं कार्य्यगतैकरूप्यनिरूप्य न निस्तार एव न्यायमननं नात्र करणमिति हि यदि कार्य्य-व्यक्तिमभिसन्धाय तदा तत्पूर्वं प्रतीतानां तत्रा-करणत्वं दुरवधारणं ततस्तज्जातीये तज्जा-तीयव्यभिचारप्रतिसन्धानेऽवश्यं पतनीयमिति। अथाव्यवहितार्थप्रमात्वं तथात्वं तर्हि किम-पेक्ष्य व्यवधानं किं वेति वाच्यम् इन्द्रियमपेक्ष्य तदसन्निकर्षस्तदिति चेत् तर्हीन्द्रियसन्नि-

दृष्टप्रकाशत्वमिति कुटिलिकार्थः स चानुपपन्नः स्वविलोचनगोलकानुमानव्याप्तेः। ज्ञानाजन्यज्ञानत्वं तदिति चेन्न सविकल्पकविशेषाव्यापनात्। एतेन विषयान्तरज्ञानाजन्यत्वं तदिति प्रत्युक्तं सविकल्पकस्याधिकव्यवच्छेदरूपविषयत्वात् तदवधिज्ञानजन्यत्वात् स्वविषयानन्तर्गतार्थज्ञानाजन्यधीत्वं तत्। नच सप्रतियोगिकार्थप्रत्यक्षाव्याप्तिः प्रतियोगिनोऽपि विशिष्टार्थप्रविष्टस्य तत्ताया इव प्रत्यभिज्ञायां प्रत्यक्षविषयत्वोपगमात्। स्वप्रतियोगित्वेन विशेषणादिति चेन्न स्वपदेनैव क्षारीकृतत्वात् कार्य्यव्यक्त्यावजन्यताया दुरवधारणत्वाच्च। तत् जातीये तज्जातीयव्यभिचारशास्त्रग्रहे च कार्य्यैकजात्ये पूर्व्ववत्पतनमिति स्वकालावच्छिन्नार्थबोधकत्वं साक्षात्त्वमित्यपि न स्वार्थाविवेचनात्। कथञ्चानुमानादिव्यवच्छेदः तत्र व्याप्त्यादिप्रविष्टकालानियतार्थत्वं यद्यपि चन्द्रोदयसमुद्रवृद्ध्यादौ स्वकालार्थत्वं तथापि व्याप्तिप्रविष्टतैव तादृशत्वस्य प्रयोजिकेति चेन्न कथमप्यस्तु तथापि स्वकालावच्छिन्नार्थत्वस्य सत्त्वा

वात्। नच यज्जातीयमेवमेवेति विशेषः साजात्यं वैलक्षण्यञ्चस्यागतः सिद्धौ किमनेन नच तद्रूपेति वक्ष्यते। व्यवसायादिकमन्तरेणेति चेन्न तस्यैव समर्थत्वेन स्वकालकथावैयर्थ्यात्। यथा च न तदपि तथा वक्ष्यते। यत्तु कश्चिदाह स्वप्रकाशनिषेधात् स्वप्रकाशावच्छिन्नार्थप्रकाशत्वासम्भव इति तदप्ययुक्तं वस्तुतो यः स्वकालस्तस्य विवक्षितत्वात्। वर्त्तमान प्रकाशस्त्येति निरुक्तिपर्य्यवसानात् वर्त्तमानार्थस्य च सर्व्वनिर्वचनीयत्वात्। तथा चोक्तम् "सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना।" तस्मादस्मदुक्तमेव युक्तम्।

षोढासन्निकर्षेतरायुक्तविषयनियमं ज्ञानं तथेति चेन्न दोषवशाज्ज्ञातसाक्षाद्बोधे तदसम्भवात्। प्रमासाक्षात्कारस्तावत्तथेति चेन्न साक्षात्त्वेन प्रमेतरयोरविशिष्टतया साक्षात्त्वस्य साधारणस्यैव निर्वक्तव्यत्वात्। अनिष्टश्चमबुद्धिमते षोढासन्निकर्षस्य प्रत्येकमिलिता विकल्पानुपपत्तेः साक्षात्त्वेः स्वरूपयोः स्वेन रूपेण वस्तुनो भानमिति चेन्न अनुमानादिव्याप-

नात्। अनुमानादौ लिङ्गाद्यपेक्षत्वात्तदवच्छिन्न कालसम्बन्धबोधत्वं न त्वध्यक्ष इति चेन्न व्यभिचारात् यत्र लिङ्गादिभाव्यादिबोधकं तत्र तत् कालताव्यभिचारात्। एतेन यदि न लिङ्ग-कालावच्छिन्नव्यापकप्रतिभासोऽनुमा तदा कूटव्याप्यानुमितस्य व्यापकस्य द्वैविध्यात् सत्य-व्याप्यव्यक्त्यन्तरवतः प्राप्तौ व्यक्तिकालावच्छिन्न व्यापकप्राप्त्या तावत्यंशे प्रमात्वं प्रमाविशेषान्त-र्भावानिर्वाह्यमापद्येतेति निरस्तम्। भूतादि-व्यापकानुमाने व्याप्यकालत्वासम्भवात् तथापि चाग्न्यादिमदंशमात्रे प्रमात्वापातदुष्परिहर-त्वस्योक्तत्वात्। अनुपस्थितप्रतीतिः साक्षाद्धी-रिति चेन्न विशिष्टप्रविष्टविशेष्यप्रत्यक्षाव्याप-नात्। करणानुपस्थितत्वं विवक्षितमिति चेन्न परकरणोपस्थितव्यापनात्। स्वकरणोपस्थित-त्वस्य च स्वमदक्षिनिर्निक्षिप्तत्वात्। व्याप्त्युप-स्थितत्वादीनां व्यतिरेकस्य यत्र समुच्चयः सा धीः साक्षाद्धीरिति चेन्न व्याप्त्यादि प्रत्यक्षा-व्यापनात् चक्षिद्धत्वाच्च सर्वतोऽस्मिमानित्येव प्रतिज्ञानात् शब्देन च स्वाप्रतिपादनात्

शाब्दादिमितेश्च प्रत्यक्षत्वापादनात् । अव्यवहितधीत्वं साक्षाद्धीत्वमिति चेन्न व्यवधानविकल्पानुपपत्तेः । यदि द्रव्यविशेषान्तरव्यवस्थिति र्व्यवधिः तदानीमप्रत्यक्षविमुधियां साक्षात्त्वापत्तिः । अथ ज्ञापकज्ञानपूर्वसत्ताव्यवधानं तदा परत्वाद्यप्रत्यक्षतापत्तिरिति विशिष्टवैशिष्ट्यं व्यवधानमिति चेन्न धूमविशिष्टे वह्नि वैशिष्ट्यमिति [illegible]स्थितौ तथात्वे कार्य्यकारणभावविरोधः प्रतीतौ धूमवैशिष्ट्यस्य धर्मिविशेषणत्वे हेतोरंशतः स्वष्टत्तिः । साध्यविशेषणत्वे व्याप्तिग्राहिप्रत्यक्षे व्यवधानाभावात् न साक्षात्त्वं स्यात् । अथ ज्ञानस्य जातिभेदः कश्चित्साक्षात्त्वं तत्रानुभवत्वेन परापरभावानुपपत्तिः स्मृतेरपि साक्षात्कारित्वादिति केचित् तन्न स्मृतेस्तथात्वानभ्युपगमात् स्वप्नस्य तावत् स्मृतित्वासिद्धेः सिद्धौ वा तत्र साक्षात्त्वारोपोपगमात् भावनाबलजस्य च क्वचिदालोकादिधर्मिकक्रियाद्याश्रयधर्मारोपत्वं शुक्तिरजतभ्रमवत् निमीलितनयनादेश्च स्वप्नवदेव गतिरेवं गन्तव्येति । इदन्तु स्यात् परमाण्वादि-

बुद्धावनुव्यवसीयमानायां परमाणुप्रतीत्यंशोऽपि साक्षात्त्वमनुभूयत इत्यत्र न नः सम्प्रतिपत्तिः। अन्यथा लिङ्गबुद्धिलक्षणया प्रत्यासत्त्या वह्निरपि मानसप्रत्यक्ष एव न लैङ्गिक इति परेण सुवचत्वात्। एवं प्रत्यभिज्ञायां पूर्वदेशकालस्थितिमत्त्वं पश्यामीति कस्यानुभवो यदवलाऽत्तयाभ्युपेयं तज्ज्ञाततीति कलङ्कोऽयम्। यदि च साक्षात्त्वं जातिरध्यक्षमानिका तदा प्रतीतौ कस्याञ्चिदध्यक्षानध्यक्षविवादो न स्यात् न हि घटादिप्रत्यक्षत्वे विवदन्ते। क्वचिदस्फुटत्वाद्विवाद इति चेत् नैवम्। निरंशे वस्तुनि कः स्फुटावभासः यद्येकार्थसमवायिभिर्भूयोभिः सहोपलम्भः स ज्ञानत्वादिवत्साक्षात्त्वेऽपि तत्जातिज्ञानादित्वेन विवादः साक्षात्त्वे त्विति विशेषो वाच्यः। दर्शनकृतो हि विवादो न साहचर्य्येण वाञ्छालात् किन्तु तत्त्वाभिमानादेव प्रत्यक्षार्थधर्मिकायाञ्चानुमायां साक्षात्त्वपरोक्षत्व सङ्करो दुर्वारः। परोक्षत्वं न जातिः किन्तु साक्षात्त्वमेव तथा केवलन्तु साक्षात्त्वाभावः परोक्षत्वमिति चेन्न अस्यार्थस्य विनि-

गन्तव्यत्वापत्तेः। सार्व्वज्ञमनुमन्यमानस्य च मते दृष्टलिङ्गादेरीश्वरस्य लिङ्गादिबह्वानप-रोक्षत्वेनापि विरोधः लिङ्गादिधीजन्यत्वमनु-मितित्वादौ प्रयोजकमिति चेत् साक्षात्त्वेऽपि तर्हीन्द्रियसन्निकर्षादिजत्वमिति साक्षादपि सा न स्यात्। व्यञ्जकोपाधिनियता च जाति-रिष्यते नच तदत्र उक्तप्रकारबाधात्। नच व्यञ्जकनियमानभ्युपगमत्वान्न तदत्रोपगम्यमिति वाच्यं किं मया दृष्टं तया किं वा केनचित्कथित-मिति संशयानुपपत्तेः। प्रागभूतायां स्मर्य्यमा-णायां तदुद्बोधे त्वमाते मनसा ज्ञानरूपया प्रत्यासत्त्या प्रत्यक्षीक्रियमाणायां साक्षात्त्वा-ग्रहो विना व्यञ्जकाभावं कथं स्यात्। अथ ध-र्मस्य साक्षात्त्वमिति स्वप्रकाशवादे निरस्तं तथाप्यबाधितसाक्षात्त्वबुद्धिव्यवहारबलादन्ततः पदार्थान्तरमपि साक्षात्त्वमनुमत्य न निस्ता-रोऽस्ति भ्रान्तेरप्यभ्रान्तिपूर्व्वकत्वादिति चेन्न तत्रापि साक्षाद्ग्रहे क्वचित्तद्विवादो न स्यादि-त्यादिदोषसाम्यात्। अनुमानादिवेद्यत्वे च लि-ङ्गाद्यनुपपत्तेः क्व च व्याप्त्यादिग्रह इत्यादि-

दुरन्तपरम्परैव स्यात् सप्तपदार्थीनियमसाधनानि च न कथं परिपन्थीनि स्युरिति। लिङ्गादिजत्वाभावसमुदायवती धीः साक्षादिति चेन्न परोक्षविषयसंशयादावतिव्याप्तेः तादृशी प्रमा तथेति चेन्न प्रत्यक्षभ्रमाव्याप्तेः। अनुमानादि व्यवच्छेद्यतत्तदसाधारणकारणाजनिता धीः साक्षादिति चेन्न एवं हि प्रत्यक्षतत्तदपरव्यतिरिक्ता धीरनुमानादिरिति वैपरीत्यमेव कुतो न स्यादित्यविनिगम्यत्वं स्यात्। तेषु व्यवच्छेद्येष्वेकस्यादि परित्याय व्यवच्छेद्यहेत्वजनितत्वेनापि साक्षात्त्वस्य तत्रानुगतबुद्ध्याद्यन्तरापत्तेः व्यवहारे सति निमित्तानुसरणं न तु निमित्तानुसरणेन व्यवहार इति चेन्न निमित्तस्यात्यन्तापत्तिद्वारस्यैव कल्पत्वात् तत् तज्जनितत्वाभावो हि तेनैव रूपेणानुगत व्यवहारप्रत्यया वाढ्यान्न त्वन्येनापि तथात्वे यावत्परिदृष्टव्यक्तिविशेषान्यत्वेन व्यवहारोपपत्तौ गोत्वाद्युच्छेदप्रसङ्गः। तस्मात् "विधिभिः प्रत्ययोऽन्योऽयं व्यतिरेकसमर्थिनः। नैव चेदपराहन्ति किमन्यापोह वादिना।," शब्दानु-

स्मृतीप्रमाकरणप्रमितिव्यतिरिक्तत्वे सति प्रमितित्व प्रत्यक्षलक्षणमभिधाय यः कोपि न क्षमते स प्रष्टव्यः किं प्रत्येकमिदं लक्षणमुत मिलितम्। नाद्यः प्रत्येकं व्यभिचारात्। द्वितीये किं मिलितानां निषेधः उत निषेधानां मिलितत्वम्। नाद्यः प्रत्येकमेव व्यभिचारात् न हि प्रत्येकमनुमित्यादौ मिलिततद्रूपसम्भवः। नापि द्वितीयः मिलितास्वनुमित्यादिषु निषेधमेलकसम्भवेऽपि प्रत्यक्षत्वानभ्युपगमात् न बह्वाश्रयाणामुक्तनिषेधानां लक्षणत्वमपि त्वेकाश्रयाणामिति चेन्न समुदायिभेदेऽपि समुदायस्यानुमित्यादिवदेकतोपचारबीजाविशेषाभ्युपगम इति हि वक्ष्यते। असमुदायत्वे सतीत्यपि विवक्षितमिति चेन्न समुदायत्वविशिष्ट एवांशतः स्यात्ति इत्तिविरोध भयेनासमुदायत्वस्येष्टव्यत्वेन तादृगपि प्रसङ्गो दुर्वारः। ज्ञानस्यैवं विवक्षितमिति चेन्न विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादेव। एकेति च किमाश्रयस्याभेदो विवक्षितः उताभिन्नजातीयता उतैकोपाधिमत्ता उतैकसंख्यायोगिता उत व्याप्तिरन्यः-

दुरन्तपरम्परैव स्यात् सप्तपदार्थीनियमसाधनानि च न कथं परिपन्थीनि स्युरिति। लिङ्गादिजत्वाभावसमुदायवती धीः साक्षादिति चेन्न परोक्षविषयसंशयादावतिव्याप्तेः तादृशी प्रमा तथेति चेन्न प्रत्यक्षभ्रमाव्याप्तेः। अनुमानादि व्यवच्छेद्यतत्तदसाधारणकारणाजनिता धीः साक्षादिति चेन्न एवं हि प्रत्यक्षतत्तदपरव्यतिरिक्ता धीरनुमानादिरिति वैपरीत्यमेव कुतो न स्यादित्यविनिगम्यत्वं स्यात्। तेषु व्यवच्छेद्येष्वेकद्व्यादि परित्याय व्यवच्छेद्यहेत्वजनितत्वेनापि साक्षात्वव्यक्तव तत्रानुगतबुद्ध्याद्यन्तरापत्तेः व्यवहारे सति निमित्तानुसरणं न तु निमित्तानुसरणेन व्यवहार इति चेन्न निमित्तस्यात्यन्तापत्तिद्वारस्यैव कल्पत्वात् तत् तज्जनितत्वाभावो हि तेनैव रूपेणानुगतव्यवहारप्रत्यया वाढ्यान्न त्वन्येनापि तथात्वे यावत्परिदृष्टव्यक्तिविशेषान्यत्वेन व्यवहारोपपत्तौ गोत्वाद्युच्छेदप्रसङ्गः। तस्मात् "विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकसमाश्रितः। नैव वेदपरोक्षेऽस्मिन्नन्यापोहवादिना।," शब्दानु-

स्वातोपमात्वप्रमितिव्यतिरिक्तत्वे सति प्रमितित्व प्रत्यक्षलक्षणमभिधाय यः कोपि न कथते स प्रष्टव्यः किं प्रत्येकमिदं लक्षणमुत मिलितम्। नाद्यः प्रत्येकं व्यभिचारात्। द्वितीये किं मिलितानां निषेधः उत निषेधानां मिलितत्वम्। नाद्यः प्रत्येकमेव व्यभिचारात् न हि प्रत्येकमनुमित्यादौ मिलिततद्रूपसम्भवः। नापि द्वितीयः मिलितास्वनुमित्यादिषु निषेधमेलकसम्भवेऽपि प्रत्यक्षत्वानभ्युपगमात् न वक्ष्याश्रयाणामुक्तनिषेधानां लक्षणत्वमपि त्वेकाश्रयाणामिति चेन्न समुदायिभेदेऽपि समुदायस्यानुमित्यादिवदेकतोपचार बीजाविशेषाभ्युपगम इति हि वक्ष्यते। असमुदायत्वे सतीत्यपि विवक्षितमिति चेन्न समुदायत्वविशिष्ट एवांशतः स्वात्मनि वृत्तिविरोध भयेनासमुदायत्वविशेष्यत्वेन ताद्दृशि प्रसङ्गो दुर्वारः। ज्ञानत्वेवं विवक्षितमिति चेन्न विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादेव। एकेति च किमाश्रयस्य स्वभेदो विवक्षितः उताभिन्नजातीयता उतैकोपाभिमता उतैकसंख्यायोगिता, उत ज्ञाविरक्षः-

योगाभावः। आद्ये तद्विशिष्टव्यापकतादोष-व्यक्त्यात्मनोऽभेदस्य व्यावृत्तत्वात् धर्मिणा च लक्षणविशेषणे अलक्ष्यधर्मत्वं लक्षणस्य स्यात् स्वस्यैव स्वधर्मत्वानुपपत्तेः। आश्रयाभेदोप-लक्षणत्वे प्रागुक्तदोषः द्वितीये तदेवाभिन्न-जातीयत्वं लक्षणमस्तु अवश्यन्तया प्राथम्येन प्रतीयमानत्वात्। न तृतीयः परोक्षप्रमिति-त्वस्यानुमित्यादिषु मिलितास्वपि भावात्। नापि चतुर्थः वैशेषिकपक्षे गुणतया तदभावात् भावे वानुमित्यादिव्यक्तीनां तयाणामप्य-भावाना मेकत्वसंख्यासामानाधिकरण्यसम्भ-वात्। मिलितानामप्येकसमुदायापेक्षया तथा-त्वात्। नापि पञ्चमः वैशेषिकमतानुसारे-णानुमित्यादिष्वयेऽपि तदभावस्य तुल्यत्वात्। अतदनुसारेण प्रत्यक्षव्यक्तिष्वपि द्व्यादिसंख्या-योगात् तथापि नैकस्यां प्रत्यक्ष व्यक्तौ द्व्यादि-परिसमाप्तिः। द्व्यादिसंख्यापरिसमाप्त्यभावस्य तदभाव शब्देन विवक्षित इति चेन्न का हि परिसमाप्तिर्यैकस्यां व्यक्तौ नास्तीत्युच्यते। न-नैव इत्तिर्द्व्यादेः परिसमाप्तिः सैकस्यां व्यक्तौ

नास्तीति चेन्न एवमेकत्वस्यापि न क्वचित्परि-समाप्तिः स्यात् नहि तस्य तत्रैव वृत्तिरन्य-स्यैकत्वाभावप्रसङ्गात् । अत एकत्वसंख्यावत्या-मेव व्यक्तौ द्व्यादिपरिसमाप्तिरित्यविशेष एव । एकव्यक्तिगता एकत्वसंख्याव्यक्तिर्नान्यत्रेति चेन्न सत्ताव्यक्तेरप्येवम्भावप्रसङ्गात् अननुगत-त्वापत्तेश्च । सत्तैव जातिरूपा एकत्वन्तु प्रति-व्यक्तिभिन्नं गुणपदार्थ इति चेत् नूनं वैशेषिकै-र्विप्रलब्धोऽसि कथमन्यथा सदेकप्रत्यययोरनु-भवव्यवहार विशेषमपश्यन्नपि कानिचित्कानि-चिदसम्बद्धान्यक्षराणि प्रलपसि । सत्त्वैकत्वयोः परापरत्वानुपपत्तेरेवं स्यादिति चेन्न साम्यात् जातिपरापरत्वधौव्यस्य न क्वाप्येकन्यूनवृत्तित्वे प्रमाणं स्यात् । क्व तथेति चेन्न शैलेऽनलस्यानु-मायां क्व हस्तवितस्त्यादौ तदंश इत्यनिश्चय-वदोषत्वात् नत्वन्यत्तु मा वासीदेकत्वमनुगतं किमनेनात्र निरूपितेन द्वित्वादि यत्र न समा-प्यते अभिहिताभावत्रयं चास्ति तत्प्रत्यक्षमिति । नैवम् । अनुमित्यादित्रयेऽपि न त्रित्वं परिस-माप्तम् एवं सत्यन्यानि त्रीणि न स्युः । अन्या

सा त्रित्वव्यक्ति र्यान्यत्रेति चेन्न त्रित्वव्यक्तेः कस्याश्चिदनुमित्यादित्रये समाप्त्यभावात्। काचिदपि त्रित्वव्यक्ति र्यत्र न समाप्यत इति चेन्न अव्यापकत्वात् प्रत्यक्षत्वस्य च त्रित्वव्यक्तेश्चावश्यं सामानाधिकरण्यस्य वैशेषिकमतव्युत्थितेन भवताभ्युपगम्यत्वात्। अन्यथा प्रत्यक्षव्यक्त्यं स्त्रिस्रो न स्युः तदेव चिरभिधीयते यत्र त्रित्वं परिसमाप्यते। किञ्च तथापि सएवातिव्यापकतादोषः त्रित्वेनावच्छिन्नास्वनुमित्यादिव्यक्तिषु त्वभिहितमभावत्रयमस्तीति तत्र प्रत्यक्षलक्षणं गतमित्यति व्याप्तिरुक्ता तद्व्यावर्त्तनाय भवताभिधीयते काचिदपि त्रित्वव्यक्ति र्यत्र न समाप्यत इति। न चैवमुक्ते सातिव्याप्तिर्निवर्त्तते तत्राप्युक्तविशेषणस्य विद्यमानत्वात्। न हि त्रित्वावच्छिन्ने तस्मिन् त्रित्वव्यक्तिः काचिदपि समाप्यते त्रित्वलक्षणैकोपाध्यवच्छिन्ने तस्मिन् त्रित्वव्यक्त्यन्तरं भवदप्याश्रयान्तरमादाय वर्त्तते न तु यत्रैव परिसमाप्यते यत्र चोक्तमुपाधिभूतं त्रित्वं त्रिषु यदि त्रित्वसमाप्तिर्धर्मिषु इष्यते तदा तद्दर्शनेन तत्र धर्मि-

माले लक्षणव्यावृत्तिः सिद्ध्येत् न तु नित्वविशिष्टे धर्मिणि तस्मादतिव्यापकं वद्भवस्थमेव। अभावत्रयञ्च नित्वोपाध्यवच्छेदेन समुदितताम्युपगतवति विशिष्टे धर्मिणि वर्त्तते नत्वविशिष्टे प्रत्येकमभावत्रयावस्थानस्य तेषु वक्तुमशक्यत्वात्। अथ मन्यसे तादृशस्य विशिष्टस्य प्रमितित्वेनैव व्यवच्छेदः नह्यभावत्रयवत् नित्वविशेषणमाश्रयकोटावन्तर्भाव्य तासु धर्मिव्यक्तिषु प्रमितित्वं वर्त्तते किन्तु तेषां धर्मिणां स्वरूपमात्रे उक्ताभावत्रयं प्रमितित्वञ्चेतद्द्वयमस्ति तत्प्रत्यक्षमिति हि ब्रूम इति न भवतापि भिन्नधर्मावच्छिन्नस्यैव धर्मिणः प्रमितित्वमभावत्रयवत्त्वञ्चावश्यमभ्युपगन्तव्यम्। तथा हि यदि प्रमितित्वस्य क्वाचित्कत्वे नियामकं नोच्यते तदा सर्व्वा प्रमितिः स्यात् न वा काचिदपि। "सर्व्वत्र सत्तासत्ता वा नियमेऽन्यानपेक्षया। नियामकाद्धि भावानां क्वाचित्कत्वस्य सम्भवः।" तन्नियामकाश्रये विशेषणीभूतं वा वक्तव्यम् उपलक्षणीभूतं वा। आद्ये यदेव प्रमितित्वस्याश्रयविशेषणं तदेव यद्य-

भाववत्त्वयस्यापि तदा लित्वावच्छिन्नेऽनुमित्यादाव-भाववत्त्वयस्य दर्शितत्वात्तन्न च प्रमितित्वेनापि लित्वावच्छिन्ने भवितव्यमिति प्रमितित्वान्न तद्व्यवच्छेदः। अथान्यावच्छिन्ने प्रमितित्वमन्य-धर्मावच्छिन्ने चाभाववत्त्वयसम्बन्धः तदा नास्ति त्वत्पक्षेऽपि प्रमितित्वस्यैक धर्मविशिष्टाश्रयत्व-लक्षणमेकाश्रयत्वं विशिष्टे धर्मिण्याश्रितो धर्म्याश्रित एवेति कृत्वा च प्रमितित्वस्याभाव-त्वयसमानाश्रयत्वेऽनुमित्यादि त्वयेपि प्रसङ्ग-स्तदवस्थः। नापि द्वितीयः उक्तलक्षणीभूतेन केनचिद्धर्मेण योऽसावुपलक्षितोधर्मो स एव खलु लित्वविशिष्टोपि विशेषणवतापि याव-द्विशेष्यवस्तुनोविशेष्यवस्त्वात्मकत्वात्। यथा द-ण्ड्यपि पुरुषः पुरुष एव एवञ्च सत्युपलक्षि-तादनन्यभूते लित्वविशिष्टेऽप्यनुमित्यादौ प्रमि-तित्वमाश्रितं नियामकेनोपलक्षणेनोपलक्ष्या-भेदव्यवस्थिततया तस्याव्यवच्छिन्नत्वात्। तथा चातिव्याप्तिर्दुर्व्यपायिता तथाप्युपलक्षकेण लित्वविशिष्टतया नोपलक्षितोऽसौ धर्मो किन्तु स्वरूपेणेति चेन्न उक्तमेव यदेव तदुपलक्षितं

तदेव विशिष्टमपि तथापि विशिष्टेन रूपेण तावन्नोपलक्षितमिति चेत् सोपलक्षि अवि- शिष्टेनापि तन्नोपलक्षितःमेव अन्यथा प्रकृतेपि वैयधिकरण्यापत्तिः। तदास्तामुल्लसत् पल्लव- वचनविलसितेनेति। तदेवं लक्षणान्तरेऽपि प्रतितादितोऽयं दूषणसमूहः स्वयमूहनीयः। "एतदेव परास्यस्य भट्टैरिदमुदाहृतम्। लक्षणस्याभिधानन्तु केनांशेनोपयुज्यते।" अन्याभिप्रायोक्तमपि हि तत्सामान्यतोऽप्युप- पद्यमानमेवेति।

अनुमानमपि किमुच्यते। करणपक्षे लिङ्ग- परामर्शोऽनुमानमिति चेत् किं लिङ्गत्वं व्या- प्तस्य पक्षधर्मत्वमिति चेन्न संशयस्योपलक्षणत्वे तत्र इहापि व्यापकं तत्परामर्शातिप्रसङ्गात् अतएव न तस्य वर्त्तमानस्यातत्कालेऽप्युप- लक्षणत्वात्। विशेषणत्वे चानुमाय व्यापकं धर्मिणा नाशवदप्रष्टर(?)ापत्तेः पक्षधर्माद्धेतोः पक्षांशे विशेष्ये साध्यसिद्धिरीदृशञ्च वैयधिक- रण्यमिष्टमेवेत्यतो नैवमिति चेन्न पक्षमादाय वैयधिकरण्ये नियतसामानाधिकरण्यलक्षण-

व्याप्तिलोपापत्तेः। तथापि विशेष्यमादाय साध्यैवेति चेन्न साध्यविशेषसिद्धिरपि यत्र व्याप्तिबलायातं सामान्यं तत्र सामान्यप्रतीत्य-पर्य्यवसानबलादेवेति सामान्यविशेषसिद्ध्युपयोगिनी पक्षधर्मता त्वदिष्टा केवलं सिद्धसाधनपरिहारायानुमितिकारणत्वेनैष्टव्या। सिद्धसाधनञ्च न स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशिनी सा। मोक्षमार्गे हि "आगमेनानुमानेन ध्यानात्प्रत्यक्षणेन च। त्रेधात्मनि प्रमाणानां संप्लवः स्वार्थमिष्यत इति।" एतेन संशययोग्यतापि निरस्ता। व्याप्यत्वमिति चेत् किं वस्तुगत्या व्याप्यस्वरूपेण परामर्शोऽनुमानं व्याप्यतया वा। नाद्यः अगृहीतव्याप्तेरपि धूमादिपरामर्शस्यानुमानताप्रसङ्गात्। नापि द्वितीयः व्याप्तुरखिलः प्रमाणस्यानुमानत्वप्रसङ्गात् तस्यापि व्याप्याश्रितताया अवश्यवक्तव्यत्वात्। अतएव द्वितीयतृतीयविशेषणे अपि निरस्ते आरोपावच्छिन्नतयाप्यापत्तेः। गृहीतव्याप्तिना च युगपदुभयग्रहणे द्वावेतौ व्याप्यव्यापकाविति परामर्श-

स्यानुमानत्वप्रसङ्गात् । नच तदनुमानमेव असन्दिग्धतया पक्षत्वाभावेन तद्धर्मस्य हेतोः सिद्धसाधनवद् पक्षधर्मत्वात् । स्वार्थानुमाने नायं दोष इति चेन्न प्रत्यक्षलक्षणोपपन्नत्वा साक्षात्त्वासाक्षात्त्वविरोधापत्तेः । अव्यापकविषयत्वे सतीति चेन्न व्याप्यविषयत्वाभावप्रसङ्गात् । व्याप्यत्वं हि सप्रतियोगिकग्रहणं तथा चैतस्य व्याप्यमिदमिति गृह्यते तथा च सति व्यापकस्यापि विशेषणस्य ग्रहणमवश्यं वक्तव्यम् अन्यथा विशिष्टग्रहणस्य वक्तुमशक्यत्वात् विशेषतोऽव्यापकाविषयत्वे सतीति चेन्न अग्निधूमौ व्याप्ताविव्याप्तोपदेशात्पूर्वं भूयोगृहीतवह्निधूमसाहचर्य्यस्य वह्निधूमाग्रहणकाले विमर्शवशात् वा जायमानव्याप्तिग्रहणस्य व्याप्यपरामर्शोऽनुमानं स्यात् न परामर्शः प्रत्ययमात्रं येन प्रथमग्रहणे प्रसङ्गः स्यात् । किन्नाम प्रत्यभिज्ञानमिति चेन्न विचाराद्वाप्तोपदेशाद्वा प्रतीत्य व्याप्तिं पुनराप्तोपदेशाद्विचारान्तराद्वा यैव मया व्याप्तिर्गृहीता सैवेयमिति प्रत्यभिज्ञानात्मकव्याप्तिज्ञानमनुमानं स्यात् । विशेषतो व्याप-

विषयत्वे सतीति चेन्न अव्यापकत्वप्रसङ्गात्। एकव्यक्तिविषयत्वस्य व्यक्त्यन्तरेऽसम्भवात्सामान्यतो व्यक्तिविषयत्वस्य चातिप्रसञ्जकत्वात्। किञ्च धूमवत्त्वादेर्यदा कदाचिदग्निमत्त्वं वा प्रतीयते तदानीं वाग्निमत्त्वं पर्व्वतादेः नाद्यः तदानीमिवान्यदाप्यग्न्यर्थिप्रवृत्तेस्तत्र प्रसङ्गात्। न द्वितीयः तदानीमग्निसत्तया व्याप्तत्वानवगमात्। तद्वेति धूमकालोपेक्षित इति चेन्न क्वचिद्देशेऽन्यदापि धूमस्यावस्थानमस्तीति कालान्तरस्यापि धूमकालत्वात्। तद्गतधूमकालोपेक्षित इति चेन्न तच्छब्दस्य व्यक्तिविशेषवचनत्वेऽप्रतीतव्याप्तिकत्वं यत्किञ्चिद्व्यक्तिवचनत्वे चोक्तदोषापत्तिः हेतोः पक्षधर्मतयापर्व्वतादिधर्मः साध्यो माभूत्ततस्तदस्तु कालान्तरे किं न स्यात्। तं कालमन्तर्भाव्य पक्षत्वे कथं पश्चान्निष्कम्पं प्रवर्त्तते। धूमकालमन्तर्भाव्य चेदुक्तमावर्त्तते तद्धूमकालश्चेदंशतः स्ववृत्तिः।

कश्च व्याप्तिशब्दार्थ इति वक्तव्यम्। अविनाभाव इति चेन्न किमेकस्याव्यतिरेकोऽपरस्य भावोऽविनाभावपदार्थः उत एकस्य व्यतिरेके-

ऽपरस्य व्यतिरेकः। यद्वाद्यस्तदा व्यतिरेकोऽन्वयार्थ इत्येकस्यान्वयेऽपरस्यान्वय इत्युक्तं स्यात् एवञ्च सति पार्थिवत्वलोहलेख्यत्वयोरन्वयो व्याप्तिः स्यात्। न काचित्कः सम्बन्धो व्याप्तिः सार्व्वत्रिकस्य तथात्वेन विवक्षितत्वादिति चेत्। किमिदं सार्व्वत्रिकत्वं सम्बन्धस्य सर्व्वासु तत् जातीयव्यक्तिषु विद्यमानतेति चेत्। नैवं सर्वतज्जातीयव्यक्त्यपरिज्ञाने शक्यावधारणा। न च सर्व्वास्ता व्यक्तयो विशेषतो ज्ञातुं शक्याः तत्तत्प्रमितिकरणासम्भवात् इन्द्रियेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्व्वास्तज्जातीयव्यक्तयो गृह्यन्ते। यदनभ्युपगमे पराङ्कमुद्दिश्य मुग्धायाः पुत्रप्रार्थनमिति वाचस्पतिरुपालम्भमवादीदिति चेत्। नैवम्। सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्व्वतज्जातीयव्यक्तिग्रहणे प्रमेयत्वादिव्याप्तिं गृह्णतः सार्व्वज्ञ्यप्रसङ्गात् क्वचिदप्यज्ञानं ते न स्यादिति च सार्व्वज्ञ्यापादनमिति न प्रकृत्यापि प्रमेयतया सर्व्वं तदा ज्ञातमेव न तु रूपान्तरेणेति चेन्न यदि रूपान्तरेण तत् प्रमेय

तदा रूपान्तरवतोऽपि प्रमेयत्वाधारतया कथमग्रहणम् अथ न प्रमेयं नास्त्येव रूपान्तरेण तत् येन तु रूपेणास्ति तेन सर्व्वेण प्रमेयमिति यावद्विद्यमानाकारेण ज्ञातत्वप्रसङ्गः। तथात्व-स्वीकारे च ज्ञायतां प्रमेयत्वदर्शिना भवता मामकी चित्तवृत्तिः ततः श्रद्दध्महे। स्यादेतत् यथा भेदोऽन्योन्याभाववैधर्म्यादिः पृथक् तथैक्यमपि वस्तूनां ततः प्रमेयत्वाद्यपि धर्म्मिणामेकत्वमेव अतः प्रमेयत्वेन ज्ञायमानं तत् सर्व्वमपि तेनैक्येन प्रतीयमानैकव्यक्त्यात्मकमेव ज्ञायमानं भवतीति कथं तदेकत्ववेदिनः सार्व्वज्ञम्। नच वाच्यं नानात्वमपि व्यक्तीनां प्रमेयमिति तदपि धर्म्मितया ग्राह्यमेवेति यतस्तदपि प्रमेयत्वादिना गृह्यमाणमेकमेव गृहीतं भवतीति। तस्मात् "एको भावस्तत्त्वतो येन दृष्टः सर्व्वे भावास्तत्त्वतस्तेन दृष्टा इति।" तत्त्वत स्तादृप्येण एकीभूता इति। तदेतदपि नोपपन्नं नानैकमिति व्याहतप्रतीत्यापत्तेः। अथ रूपान्तरेण नानात्वम् प्रमेयत्वादिना चैक्यमिति व्यवस्थिता न व्याघातः स्यात् तर्हि

प्रमेयत्वाद्याधारस्य व्यक्तिभेदस्य ह्यस्य ग्रहणात् सार्वज्ञ्यापत्तिस्तादवस्थ्यैवेति । किञ्च सामान्यलक्षणया प्रत्यासत्त्या तज्जातीय विशेषग्रहणे तासु सर्व्वासु व्यक्तिषु सम्बन्धास्तित्वे किं प्रमाणम् । सर्व्वव्यक्तिवत्सम्बन्धग्रहेऽपि व्याप्तिग्राहकमिन्द्रियमेव प्रमाणमिति चेत्तर्हि क्वचिदेवमवधारितस्य यद्यभिचारो दृश्यते तन्न स्यात् इन्द्रियेण तत्र सम्बन्धस्य प्रमितत्वात् । भ्रान्तिस्तत्र सम्बन्धप्रतीतिश्च पश्चाद्बाधादिति चेन्न सामग्र्यभेदे काचिद्भ्रान्तिः काचिदभ्रान्तिरिति विभागानुपपत्तेः दोषादोषवैचित्र्यविवेचनस्य च दुष्करत्वात् । कार्य्यभेदादेव सामग्रीभेदोऽप्युन्नेय इति चेत् उन्नीयताम् स एव तु कीदृगुन्नेय इति वाच्यं न तावत्सार्व्वत्रिकसम्बन्धभावाभावात्मकस्तदानीं भाविनां सम्बन्धानामसत्त्वेनाकरणत्वात् । सामान्यतश्च तज्जातीययोः सम्बन्धस्य प्रतीतेः पूर्व्वं सर्व्वं भ्रान्त्यभ्रान्तिसाधारणं क्वचिदपि सम्बन्धाभावे भ्रान्तेरनुत्पादात् । किमेतावता अन्य एव तर्हि कार्य्यभेदात्कारणभेदः कल्पयिष्यत इति

चेत्। स किमिन्द्रियसहकारिभूतः करणा-
न्तरमेव वा कल्पनीय इति वाच्यम्। नाद्यः
इन्द्रियस्य भाविभूतसम्बन्धांशे प्रमाणत्वकल्प-
नायां प्रमाणाभावात् प्रत्युत व्युपरतेन्द्रियव्या-
पारस्यापि विचारयतः पूर्व्वप्रतीतसम्बन्धधर्म्मि
द्वयस्य व्याप्तग्रवधारादर्शनात्। तत्रापि मनो-
ऽस्तीन्द्रियमिति चेत् अस्तु तस्मिन् कार्य्ये म-
नसः करणत्वे तु प्रमाणाभावः। अवश्य परि-
कल्पनीयेनान्येनैव सर्व्वानुपपत्त्युपशान्तेः का-
रणत्वमात्रं चक्षुरादिजज्ञानवन्मनसस्तत्र स्यात्
चक्षुरादिवत्करणम् अन्यदेव तत्कल्पनीयमिति
सप्तममिन्द्रियं प्रमाणान्तरं वा प्रसज्येत। अ-
न्यथा चाक्षुषादि प्रतीतावपि चक्षुरादेः कर-
णत्वं न स्यात्। शक्यते तत्रापि वक्तुं मन एव
तत्र सुखादिप्रतीतिवत्करणं चक्षुरादयस्तु
सहकारिमात्रम्। नापि द्वितीयः इन्द्रिया-
न्तरप्रसङ्गात् प्रमाणान्तरप्रसङ्गाद्वा। नापि
विना भाव एव एकस्य व्यतिरेकेणापरस्या-
व्यतिरेक स्तन्निषेधोऽविनाभाव इति द्वितीयः
पक्षः। एवं हि लोहलेख्यत्वव्यतिरेकश्च पार्थि-

वत्वव्यतिरेकश्च क्वचिदस्तीति पार्थिवत्वलोहलेख्यत्वयोरप्यविनाभावः प्रसज्येत। सार्व्वत्रिकं व्यतिरेकयौगपद्यं विवक्षितं न तु क्वाचित्कम् अतएवोच्यते। अविनाभावनियम इति चेन्न सार्व्वत्रिकान्वयावधारणनिगमन्यायेन सार्व्वत्रिकव्यतिरेकावधारणस्याप्यशक्यत्वात् शक्यत्वेवान्वयावधारणमेवास्तु सार्वत्रिकं व्यतिरेकावधारणकुटिलिकया। यत्र विपक्षे वृत्तौ बाधकमस्ति तयोरन्वयोव्याप्तिरिति केचित् तन्न यत्तु विपक्षे वृत्तौ बाधकं तत्प्रमाणं वा तर्को वा स्यात्। आद्ये न तावदिन्द्रियं तदसम्भवात् अन्यथा व्यभिचाराव्यभिचारसंशयो न स्यात् नाप्यनुमानम् अनवस्थाप्रसङ्गात् नाप्यर्थापत्तिः अनुमानव्यतिरेकात् व्यतिरेके तु यदि लिङ्गिव्यतिरेकेण लिङ्गस्यानुपपत्तिस्तदा ततएव लिङ्गिसिद्धेः कृतमनुमानेन। अनेवम्भावे च तयोः किमायातम्। अस्तु वा कथमपि तावदर्थापत्तिर्बाधिका तथापि कोऽदृगभ्युपगम इति प्रष्टव्यं किं विपक्षवृत्तिबाधकसमीचीनो यत्र क्वचिदन्वयोव्याप्तिः उत तत्सहितः सार्व्वत्रिको-

ऽन्वयः उत किन्नोविशेषगवेषणेन तत्सध्रीचीनः सामान्यतोऽन्वयोव्याप्तिः उत सार्व्वत्रिकान्वयः स च विपक्षे बाधकादवगम्यते। नाद्यः विकल्पानुपपत्तेः तथा हि किं विपक्षे इष्टो बाधकं सर्व्वव्यक्तिविषयम् उत सामान्यविषयम्। आद्ये यत्राप्यनुमानं प्रवर्त्तनीयं तत्राव-श्योपस्थाप्यया अन्यथाभावबाधकभूतयार्थापत्त्यैव साध्यसिद्धेः श्रान्तमनुमानव्यसनेन। द्वितीये क्वचिद्व्यभिचारेऽपि क्वचिदव्यभिचारमाश्रित्य बाधकस्य चरितार्थत्वं धूमवत्त्वमात्र-मग्निमत्त्वमात्रव्यतिरेकीत्येवं रूपो हि सामान्यतोविपक्षपक्षः तत्र च बाधकं तयोरविरोधे पर्य्यवस्यति। अविरोधश्च क्वचित्साहित्याद्भवत्येवेति पार्थिवत्वलोहलेख्यत्वयोरप्येवं भूतव्याप्तत्वप्रसङ्गः। नापि द्वितीयः विशेषणवैयर्थ्यात्। सार्वत्रिकोन्वय इत्येवोच्यताम्। न च सोऽपि सङ्गत इत्युक्तम्। नापि तृतीयः बाधकस्य सामान्यविशेषविषयताविकल्पोक्तयुक्त्यैव निरस्तत्वात्। नापि चतुर्थः तथा हि यद्धूमवत् तदग्निमदित्यत्रेदमन्वयस्य सार्व्वत्रिकत्वं वाच्यं

वाच्यं तत्सर्व्वासां धूमव्यक्तीनामग्निसम्बन्धित्वं तद्यदि व्याप्तिग्रहकाले गृहीतं तदा पक्ष-स्यापि धूमवद्व्यक्तेरग्निमत्त्वं प्राक् गृहीतं स्म-र्य्यतएवेति गतमनुमानम्। सामान्यतोऽग्नि-मत्त्वं तस्यापि गृहीतमेव विशेषतस्त्वनुमीयत इति चेन्न विशेषत इति किमग्निमत्त्वस्य वि-शेषो व्यक्तिरूपो विवक्षितः उत कालदेशादि-सम्बन्धस्तस्य। नाद्यः सर्व्वव्यक्तीनां व्याप्तौ प्रतीतत्वेन भवतैवाङ्गीकारात्। नापि द्वितीयः अग्निमद्रूपतया स्मृतस्य पक्षीभूतस्य धूमवद्वि-शेषस्य चक्षुरादिभिरेव पर्व्वतत्वादिदेशकाल-विशेषादिमत्तया परिच्छेदात्। यथा प्राक् प्रत्य-याहितसंस्कारसध्रीचीनैश्चक्षुरादिभिः परि-च्छिद्यमानेदानीं भावदेशविशेषावस्थानादेः स एवायमिति प्रत्यभिज्ञायमानताङ्गीक्रियते। तथैवात्राप्यस्तु कृतमनुमानेन। नाप्युपमानं बाधकं विपक्षे शक्यं वक्तुं तस्य नियतविषयत्वे-नैतादृशे विषयेऽनुदयात्। नापि शब्दः आप्त-स्योपदेष्टुरभावे व्याप्तेरनवगमप्रसङ्गात्। अभा-वस्तु कदाचित् स्यात् सोऽपि निरूप्यमाणो न

घटते एवं स वाच्यो यदि वह्निव्यतिरेकेण धूमः स्यात्तदा तथोपलभ्येत न चोपलभ्यतेऽतोऽनुपलम्भान्नास्ति तद्व्यतिरेकेणेति । तन्न न तथा हि क्वचिद्व्यभिचारादर्शनाद्वाऽयमभावः प्रवर्त्तते सर्व्वत्र व्यभिचारादर्शनाद्वा । नाद्यः पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गात् न द्वितीयः सर्व्वत्र योग्यानुपलम्भो वा अनुपलम्भमात्रं वा वाच्यम् । नाद्यः सर्व्वत्र योग्यानुपलम्भासम्भवात् । नापि द्वितीयः पार्थिवत्वलोहलेख्यत्वयोरपि सम्भवात् । तत्र वज्र एव व्यभिचार इति चेन्न तदीयादर्शनदशायां व्यभिचारानवगमात् । तद्दर्शनदशायां तावदस्ति व्यभिचारो यत्र तु न कदाचिदपि व्यभिचारदर्शनं तत्र व्याप्तिरिति चेत् । अत्रापि व्यभिचारो न द्रक्ष्यत इत्यत्रापि नियामकादर्शनात् । नापि विपक्षे बाधकस्तर्को वाच्यः तर्कस्य व्याप्तिमूलत्वाभ्युपगमे अनवस्थाप्रसङ्गात् । तदनभ्युपगमे स्वलक्षणविरहेण तर्काभासत्वापातात् । अथ ब्रूषे न मन्यसिदं वक्तुं तथा ह्यग्निधूमव्यभिचारशङ्कायां बाधकस्तर्कोऽयमभिधीयते यदि धूमो-

ऽस्मिं व्यभिचरेदकारणकः सन्नित्यः स्यात् न स्यादेव वा सचायमनुत्तरस्तर्कः तत्र शङ्कायां व्याघातापत्तेः। तदेवस्त्वाशङ्कते यस्मिन्नाशङ्क्य माने स्वक्रियाव्याघातायोदोषा जावतरन्तीति लोकमर्य्यादा एवं सर्व्वत्रानुत्तरस्तर्को बाधको-ऽभिधेय इति। मैवम्। किमित्येवं शङ्कितव्यं तद्धेतुफलभाव एव न भविष्यति। एवन्तु शङ्कितव्यम् अस्मिं विहायान्यस्मादपि हेतो-रयमुदेष्यतीति। न च वाच्यमेवं हि सति धूमस्यैकजातित्वं न स्यादिति क्वचिदिन्द्रिय-जन्यत्वे क्वचिदनुमानादिजन्यत्वेऽपि ज्ञानैक-जात्यवत्तदुपपत्तेः। तत्रेन्द्रियादीनामवान्तर-सामान्ये साक्षात्कारित्वादौ प्रयोजकत्वं न ज्ञानतायामिति चेन्न ज्ञानत्वस्याकस्मिकत्व-परिहारार्थं तत्कारणस्यानुगतस्य भवतावश्यं वक्तव्यत्वात्। धूमेऽपि वह्नेर्विशेष एव प्रयोजक-त्वस्य तद्वच्छङ्कितुं शक्यत्वात्। न दृश्यो तावद्‌स्मिन्प्रयोज्यो धूमे विशेष इति च न वाच्यम् एवं हि सति तददर्शनस्यापाततो हेत्वन्तर-प्रयोज्यावान्तरजात्यदर्शनेनायोग्यतया विकल्प्य-

त्वादुपपत्तेः । यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो दृश्यते तदासौ विकल्पिष्यत इति सम्भावनाया दुर्निवारत्वात् । अस्त्यामत्मनोयोगोऽनुगतं कारणं ज्ञानोत्पत्ताविति चेन्न यद्यात्ममनोयोगादुत्पद्यमानं ज्ञानं स्यादितीच्छादयोऽपि ज्ञानं प्रसज्जेरन् । यदित्वदृष्टविशेषो वा शक्तिभेदो वा ज्ञानत्वजाति र्वा ज्ञानप्रागभावो वा तत्रानुगतं कारणमुच्यते तदा तदितरत्रापि वह्निव्यभिचारे धूमस्यैकजात्यप्रयोजकतया शक्यत एव शङ्कितुम् दृष्टे व्यभिचारे मुक्तमदृष्टादेरैकजात्यपरिकल्पनमिति चेत् अस्तु दृष्टे तन्निश्चयः अत्रापि व्यभिचारो न दृश्यत इत्यत्र नियामकाभावात् शङ्क्यते एवं शङ्कमानस्य भवतो न क्वचिदनुमानं स्यादिति प्रतिवाद्यात्माद्यनुमानादिव्यतिरेकेण कथायामेव प्रवृत्त्यनुपपत्त्या त्वयं स्वीकर्त्तव्येष्वनुमानेष्वबाह्यशङ्काक्रमणात् स एव व्याघात इति चेन्न धूमवद्वह्नेरपि वह्निकारणविशेषानुमानस्यैवं सति सदनुमानत्वप्रसङ्गात् । सामग्रीसाम्येन प्रमाप्रमावैचित्र्यानुपपत्तेः । साधारण-

धर्मदर्शनविशेषादर्शनादौ सत्यपि शङ्कायास्तानुदये सामग्र्यां सत्यामपि कार्य्यानुदयात्परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां प्रतिपत्तिसामग्रीमुत्पादयितुं यतमानस्य भवतोऽपि स्वक्रियाव्याघातस्तुल्यः। व्याघातस्यैव विशेषत्वात् तद्दर्शनेन शङ्कासामग्र्येव नास्ति प्रत्यक्षे कुतो व्याघतसाम्यमिति चेन्न तद्धि न तावत् आहारादिकारणाज्जायमानमेष्टव्यं कूटविषयस्य तस्यातिप्रसञ्जकत्वात्। कूटभिन्नः प्रसञ्जकः प्रमितस्यैव स्यादिति चेन्न तस्य तर्कावसरे निरस्तत्वात्। तस्माद्यदेतद्व्याघातरूपस्य विशेषस्य दर्शनं शङ्काप्रतिपक्षभूतमुच्यते तत् किं प्रमाणात् कुतश्चिदुपजायमानं वक्तव्यम् तर्कोद्वा यदि प्रथमः शङ्कास्तित्वमपि तेनैव प्रमाणेनोपेयं शङ्कायां सत्यां व्याघातात् यदि च शङ्कां विनापि व्याघातः तदा शङ्कमानाशङ्कमानयोर्व्याघातस्य साम्यं सिद्धमेव भवतु शङ्कायामपि तत्प्रमाणं किमेतावता प्रथमोपजातशङ्कामवलम्ब्यावस्थितस्य व्याघातरूपस्य विशेषस्य दर्शनात् शङ्कान्तरं नोत्पद्यत इति

चेन्न व्याघातसत्ताकाले तदवलम्बया शङ्कयैव शङ्क्यमानव्यभिचारता तस्याः शंकाया व्युपरमे च तदवलम्बिनो व्याघातरूपस्य विशेषस्याभावात् कः शङ्कान्तरोत्पत्तेर्वारयितेति वक्तव्यं मा नामास्तु तदा व्याघातात्मा विशेषस्तदवगमस्तदाहितो वा संस्कारस्तावदस्ति। विशेषावगमतत्संस्कारौ च शङ्काविरोधिनौ। ननु स्वरूपेण क्वचिदपि विशेषस्यावस्थानं तथेति चेन्न अयावदाश्रयभाविनो विशेषस्य पूर्वस्थितस्य यद्दर्शनं तदाहितो वा संस्कारः तस्य कालान्तरे तत्प्रतिधर्म्मसंशयविरोधित्वे अवयविपाकपक्षे कुम्भस्य परमाणुपाकपक्षे परम्परया तदारम्भकस्य परमाणोः पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितया कास्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात्। यदि च शङ्कायां व्याघातस्तदा शङ्काश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनाच्छङ्कायां शङ्कान्तरं माभूत्। यदि तु व्यभिचाराश्रयस्तदा व्यभिचारः स्यादेव व्याघाताश्रयस्य व्यभिचारस्यापि प्रमितत्वापत्तेः। अनादिसिद्ध-

व्याप्तिकाले तर्को इति चेन्न तद्बुद्धेः प्रमितित्वासिद्धेः शरीरे स्वात्मप्रत्ययस्य तादृशस्याप्रमात्वोपगमात् अनादित्वासिद्धेश्चोभयत्राविशेषात्। यापि यत्र व्यभिचारः शङ्क्येत तदा व्याघातः स्यादित्येवंरूपात्तर्काद्व्याघातावगमः व्याघातप्रतिपादकस्य तर्कस्य मूलशैथिल्ये तर्काभासत्वापातात् तादृशस्यापि व्याघातोपनायकत्वे व्याघातापत्तेश्च साम्यं शक्यत एव तर्काभासादप्यतोऽपि व्याघात उपनेतुम्। अथ तर्कस्य व्याप्तिर्मूलभूताभ्युपगम्यते तत्रापि व्यभिचारशङ्कायां पुनरनवस्थैव तत्रापि व्याघातापादने पुनरित्यमनवस्थैव। "तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा। त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि। व्याघातो यदि शङ्कास्ति नचेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः।," अव्यभिचारस्यैकपरित्यागव्यवच्छेदेनापरान्वयः समकालदृष्टे नष्टेऽदृष्टः शङ्क्येत इत्याञ्जः।

स्वाभाविकः सम्बन्धो व्याप्तिरित्यपरः। स प्रष्टव्यः कस्य स्वाभाविकः किं सम्बन्धिनः उता-

न्यस्य। न चरमः वैपरीत्यापत्तेः। आद्ये कः स्वाभाविकशब्दार्थ इति प्रष्टव्यं किं सम्बन्धिस्वभावाश्रितः अथ सम्बन्धिस्वभावजन्यः अथ सम्बन्धित्वविवक्षितस्वभावानतिरिक्तः अथवा सम्बन्धिस्वभावव्याप्यः अथवा सम्बन्धिस्वभावादन्येन न प्रयुक्तः उतान्य एव कश्चिद्विवक्षितः। आद्ये पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गः। न द्वितीयः अतिव्याप्तेरव्याप्तेश्च अत एव न तृतीयः। नापि चतुर्थः व्याप्त्यनिरुक्त्या व्याप्यत्वनिरुक्तेः। सम्बन्धस्य व्याप्यत्वे च सम्बन्धिनोर्व्यापकयोः सम्भावितसम्बन्धाधिकदेशकालतया एकसम्बन्धिदर्शनेऽपरानुमानाय नियामकायोगात्। नापि पञ्चमः न प्रयुक्त इति यदि न जनितस्तदा सम्बन्धस्याकृतकत्वपक्षेऽन्येनेति विशेषणवैयर्थ्यमकृतकस्य सम्बन्धिस्वभावेनाजनितत्वात्। सम्बन्धस्य कृतकत्वपक्षे स्वरूपासिद्धिरेव स्यात्। सामग्र्याः सर्वसम्भवादन्ततः कालदेशादृष्टादिभिरपि तज्जन्यत्वस्यावश्यवक्तव्यत्वात्। नापि षष्ठः पक्षः तस्य निर्वक्तुमशक्यत्वात्। एवमेव विकल्पार्थे

चरमविकल्पः सर्व्वोपन्यस्य दूष्यो न्यूनत्वशङ्का-
भयादिति ।

अनौपाधिकः सम्बन्धो व्याप्तिरित्यपरः ।
स प्रष्टव्यः कोऽयमुपाधिर्नाम यच्छून्यत्वमनौ-
पाधिकत्वम् उपाधिः साध्यव्यापकत्वे सति सा-
धन [illegible] । अयञ्च "एकसाध्याविनाभावे
मिथः सम्बन्धशून्ययोः । साध्याभावाविनाभावी
स उपाधि र्यदत्ययः ।" इत्यस्य व्यतिरेकमुखस्य
यदत्ययः स उपाधिरिति योज्यमानस्य पर्य्यव-
सितोऽर्थः । तद्रूपभूता हि व्याप्ति र्जपाकुसुम-
रक्ततेव स्फटिके साधनाभिमते च कास्त्यु-
पाधिरसावुच्यते तदिदमाहुः । "अन्ये पर-
प्रयुक्तानां व्याप्तीनामुपजीवकाः । तैर्दृष्टैरपि
नैवेष्टा व्यापकांशावधारणा ।" स चोपाधि-
र्निश्चित इवाशङ्कितश्च यदिदमुच्यते । "याव-
च्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते । विपक्षस्य
कुतस्तावद्धेतोर्गमनिकाबलम्," इति चेन्न
साध्यव्यापके पक्षेतरत्वेऽपि प्रसङ्गात् । तद्यलि-
ङ्गिक इत्यपीति चेन्न बाधोन्नीतस्य तस्या-
व्यापनात् अन्यथा निरुपाधिसम्बन्धित्वे बाधा-

सिद्धेः। यदाह बाधेन सोपाधिकत्वं नीयते अ-न्येन वेति न कश्चिद्विशेषः। एतदर्थमपि विशे-षणीयमिति चेन्न तथापि साधनाव्यापकत्वे सतीति तद्व्याप्त्यनवधारणे न शक्यावधारणम् एवं साध्यव्यापक इत्यपि। अथ मन्यसे अदृष्ट-व्यभिचारसाध्यत्वं साध्यव्यापकत्वं विवक्षितं त्या व्यभिचारिसाध्यव्याप्यापातताऽदृष्टव्यभिचार-साध्यत्वसम्भवात् तत्राप्युपाधित्वापत्तेः। न दृ-श्यत इति च निरूपयितुमशक्यम्। व्याप्ति-ग्रहकाले च साध्यत्वाभावेन तदव्यभिचारः कथमवधार्य्यः साध्यं व्यापकमपेक्षितमिति चेन्न व्याप्त्यनवगमे व्यापकार्थानवगमात्। सम्भावितव्यापकभावोव्यापकोऽपेक्षित इति चेन्न व्यापकस्यानिरुक्तौ किंरूपतया सम्भावनापि स्यात्। अथ साध्यव्यापक इत्येव भद्रं तदानीं साध्यत्वाभावेऽपि साधयितुमर्हत्वस्य विवक्षित-त्वात् न कथं ह्यनगन्तव्यमिदमेव साधयितु-मर्हमिदं नेति व्यापकत्वादिति वक्तुमशक्य-त्वात्। नच साधनाव्यापकत्वं संत्येन निवेशितुं शक्यम्। स श्यामो मैत्रतनयत्वादित्यत्र शाका-

द्याहारपरिणतिपरम्परायाः मैत्रतनयेऽभावस्य दुरधिगमत्वात्। यथोक्तलक्षणस्य निश्चायकं प्रमाणमस्ति तत्र निश्चितोपाधित्वम् अन्यत्र शङ्कितोपाधित्वं मैत्रतनयत्वव्याप्यशाकाद्याहारपरिणतिपरम्परया श्यामत्वमित्यत्र नियामकाभावादिति चेन्न मैत्रतनयत्वेनैव हेतुना तस्यापि प्रसाधने तच्छङ्काया अपि छेत्तुं शक्यत्वात्। तत्रापि तत्तत्सामग्र्युपाधिपरम्पराभिधाने च तस्याः तस्या अपि मैत्रतनयत्वेनैव साधनस्य कर्त्तुं शक्यत्वात्। अनवस्थैवं स्यादिति चेन्न उपाध्युपन्यास एव कुतोऽनवस्था न स्यात् साध्यसामग्र्या उपाधित्वे धूमानुमानसाधारण्यात्। एवञ्च साध्यसामग्र्युपाधित्वव्यवच्छेदार्थमपि लक्षणं विशेषणीयं श्यामत्वादौ साध्ये शाकाद्याहारपरिणतिपारम्पर्यादेः तस्मिन् साध्ये श्यामत्वादेरुपाधित्वसम्भवेन कथमुपाधिरपि साधयितुं शक्यत इति चेत् मैवं प्रत्येकं द्वयोरपि मैत्रतनयत्वादिना साधने साधनाव्यापकत्वस्य शङ्कितुमशक्यत्वात्। अन्यथा सकर्तृकत्वे साध्ये अदृष्टजन्यत्वम् अदृष्ट-

अन्यत्वे च सकर्तृकत्वमुपाधिरित्युभयासिद्धिः स्यादेवं बुद्धिमत्पूर्व्वकत्वे प्रयत्नवत्पूर्व्वकत्वं प्रयत्नवत्पूर्व्वकत्वे च बुद्धिमत्पूर्व्वकत्वमेवं वह्नित्वजात्याक्रान्तवत्त्वेऽपीन्धनजन्यतेजोवत्त्वं तस्मिन् वह्नित्वजात्याक्रान्तवत्त्वमुपाधिः स्यादित्यादि विश्वमनुमानव्याकुली स्यात्। अतएव ... साधनसम्बन्धं प्रति व्यापकत्वं साध्यव्यापकत्वमित्यपि प्रत्युक्तम्। यत्राप्युपाधिर्निश्चीयते तत्राप्यतीन्द्रियोपाधिविषये तदभावस्य साधनाव्याप्त्यर्थमनुमेयतायां सोपाधीक्रियमाणेन साधनेनैव सत्प्रतिपक्षस्य कर्त्तुं शक्यत्वात्। तथा सति तत्र शङ्कितोपाधित्वमेव निर्व्यूढं स्यास्यतीति चेत्। एवं ब्रुवाणो नियतमर्जुपो: परं मन्दमन्दत्वं न प्रतिपत्त्वं तथा हि स्वीकृतनिश्चितोपाधिभाव स्याशंकितोपाधिकत्वमपि तदनुकूलं मन्यते कोऽन्यो जितलज्जात्। नच क्वचिन्निश्चितोपाध्यनभ्युपगमे तच्छंका युक्ता यत्र प्रत्यक्षेणोपाधिनिश्चयस्तत्रैव तद्दर्शनस्थानं भविष्यतीति चेन्न ऐन्द्रियकबाधे तज्जातीयस्यातीन्द्रियस्याप्यभावे ... प्रयोजकीक्रियमाणेन ...

साधयितुं शक्यत्वात्। नच यद्देकलैकजातीय-मैन्द्रियकं तदन्यलैन्द्रियकबाधे हेतुबलादतीन्द्रियं न प्रसाध्येत पाकदर्शनात् जठरानलादि साधनाव्यापकत्वे सति साध्यव्यापक इति च शाकाद्याहारपरिणतिपरम्परासाध्यं न व्याप्नोतीत्यव्यापकतादोषः। न हि शाकादित्वं नाम किञ्चिदेकमस्ति यत्साध्यं व्याप्नुयात्। अस्तु वा कथमपि तथापि श्यामत्वं न व्याप्नोति इन्द्रनीलशिलादिश्यामत्वस्याहारजन्यत्वात्। शरीरश्यामत्वं साध्यं तच्च व्याप्नोत्येवेदमिति चेन्न व्याप्तावुपाधेरभिधेयत्वात् नच पुरुषश्यामत्वेन व्याप्तिः। हेतुपक्षधर्मतयैव हि साध्यं पक्षधर्मः सिद्ध्यति न व्याप्त्या अन्यथा पुरुषपदस्य व्यवच्छेदकस्याविशेषणत्वापातात्। परम्परासम्बन्धिकज्जलादिलेपश्यामलत्वव्यवच्छेदकत्वे च संयुक्तश्यामपुरुषसमवेतश्यामत्वस्य परम्परासम्बन्धिनः कथं व्यवच्छेदः स्यात्। नच साध्यसाधनसम्बन्धादृष्टव्यभिचारत्वं साध्यव्यापकत्वं मा रूपसाक्षात्कृतिकरणादेस्तैजसादित्वे, साध्ये मूदुद्भूतरूपवत्त्वादेरुपाधित्वम्।

साधनेनापि च विशेषणतया निवेश्येन यदि केवलसाध्यव्यापकं व्यवच्छेद्यं तदा तस्य व्यभिचारे शङ्काधानक्षमस्याप्युपाधित्वं न स्यात्। अथ न किञ्चिद्व्यवच्छेद्यं तदा विशेषणत्वासिद्धिरेव। न हि प्रयोजनमात्राद्विशेषणमर्थवद्भवति किन्तु किञ्चिद्व्यवच्छेदादिति। अन्यथा शरीरजन्यत्वमिवाकर्तृकत्वे व्यर्थमसिद्धौ पर्यवस्येदिति। किञ्च आभासे व्यतिरेकिणि पक्षधर्म्महेतौ जीवच्छरीरं पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यवत् प्राणादिमत्त्वादित्यादौ कथमिदमुपाधिलक्षणं व्यवस्थाप्यं तस्याभासे व्यतिरेक्यनुमानात्मनि यत्साध्यं तदुपाधिनाव्याप्तमिष्यते तस्य पराभिमतस्य क्वचित् सिद्ध्याप्तेः। अतिरेकव्याप्तावुपाधिश्चेत् तर्हि व्यतिरेके यद्व्याप्यं तस्य व्याप्यउपाधिरवश्यं मन्तव्योऽन्यथोपाधेरन्वये साध्यान्वयापत्तिरित्युपाधेर्व्यतिरेक व्याप्तत्वस्यावश्याभ्युपगम्यतया उपाधेर्यद्व्यापकं तद्व्यतिरेक उपाधिर्व्यतिरेकस्य व्याप्यतया मन्तव्य इति परसाध्यापत्तिः। असमव्याप्तकयोरन्वयव्याप्तिसाध्यसाधनभाव-

वैपरीत्येन व्यतिरेकव्याप्तेरिति। नच दोषा-न्तरमेव तर्हि वाच्यमिति वाच्यं हेतोः पक्ष-धर्म्मत्वस्थिता व्याप्तिरित्यर्थं त्वयोपाध्यपगमध्रौ-व्यात्। भवतु वा या काचिद्व्याप्तिर्नाम तत्स्वरू-पानुमितिप्रभावात् तस्याश्चानुमितेश्च व्याप्ति-र्दृष्टव्या ततश्चात्माश्रयः। तद्भेदे वानगुगमा-विनिगमौ स्यातामिति व्याप्तिपक्षधर्म्मते अनु-मितिं भावयत इति वदन्ति।

तत्र केयं पक्षधर्म्मता। पक्षाश्रिततेति चेन्न नैयायिकादीन् प्रति प्रमेयत्वस्याहेतुत्व-प्रसङ्गात् विषयविषयिभावस्य ज्ञेयज्ञानस्वरू-पातिरिक्तस्यानङ्गीकारात् तयोश्च ज्ञेयाश्रित-त्वायोगात्। कश्चायं पक्षोनाम यद्धर्म्मत्वं पक्ष-धर्म्मत्वं सिषाधयिषितधर्म्मधर्म्मीति चेन्न सिषा-धयिषा हि प्रतिपिपादयिषा वा स्यात् प्रति-पित्सा वा। आद्ये स्वार्थानुमित्यनुदयप्रसङ्गः। द्वितीये वासुरभिगन्धानुमेयकुसुमितरमविषय स्वार्थानुमित्यनुदयप्रसङ्गः। न चानवधारित-धर्म्मधर्म्मी पक्षः हेतुमत्तयाप्यनवधारणेऽनु-मानोदयनिदानभावासम्भवात्। अवधारणे

वानवधारितधर्म्मित्वानुपपत्तेः। न चानवधारितहेतुविषयधर्माधर्मीपक्षः। तथा हि केनानवधारितधर्मी न तावदनुमानप्रयोक्ता स्वयमज्ञाते परं प्रत्यप्रयोगात्। प्रतिवादिनेति चेन्न प्रतिवादिविदितेऽप्यर्थे वादितया परस्परविद्योत्कर्षापकर्षनिरूपणार्थमनुमानदर्शनात्। तथानवधारणं यत्किञ्चिद्धेतुविषयधर्मगोचरं वादिप्रयोक्तव्यहेतुविषयगोचरं वा। न तावदाद्यः अग्निमत्त्वनिश्चयदशायामपि तत्तद्धेतुविषयबहुतरापरधर्मानवधारणात् धूमं प्रति पर्व्वतस्य पक्षधर्म्मित्वप्रसङ्गात्। न द्वितीयः तथापि तत्र प्रसङ्गात् तद्धेतूनामपि वादिप्रयोज्यत्वात् असाधारणाविवक्षायाञ्चाननुगमात् इतरेतराश्रय दोषाच्च। पक्षधर्मत्वेन हेतुत्वनिरूपणात् व्याप्तपक्षधर्मत्वस्य हेतुत्वात् हेतुना च पक्षनिरूपणात् स्वार्थानुमाने च हेतोरप्रयोज्यत्वात् पक्षाभावेनानुमानानुदयप्रसङ्गात् विरुद्धहेतौ च पक्षत्वासत्त्वप्रसङ्गात् तत्र साध्यस्य तद्धेतुविषयत्वाभावात् हेतोरेव च साध्यविपरीतव्याप्त्या दुष्टत्वात्। एतेन सन्दिग्धसाध्ये-

धर्माधर्मौ पक्षः साध्यत्वञ्च स्वपरार्थानुमान-साधारणमुत्पाद्यज्ञानत्वमिति निरस्तम् प्र-तीतिव्याप्तिबलेन सामान्यतोव्यापकावगाहन-प्रवृत्तं विशेषमादाय परं पर्य्यवसाययि व्याप्यसामर्थ्यं सेति चेन्न तस्याः सामान्यविष-याया अनुपपत्तेरसिद्धेः व्याप्तिवत्सम्भवात् अ-नुपपत्तित्वे व्याप्त्यनुप्रवेशात् अधिकविषया-काङ्क्षित्वे विरम्य व्यापारापत्तेः मानान्तरत्वा-पत्तेर्व्वा। विशेषविषयायाश्चानुपपत्तित्वेऽति-प्रसङ्गात्। पक्षधर्मतया च यदि साध्यव्यक्ति-भेदः सिध्येत् तर्ह्यनुमाय तां प्रत्यक्षेण पश्य न पुंशब्दात् पुरुषानुमायी प्रत्यक्षेण पुरुषद्वय-दर्शने तद्विशेषासंशयी स्यात्। प्राग्विशेषादर्श-नात्तथा स्यादिति चेन्न पश्चात्तन तद्दर्शितान्न संशयीतेति।

) उपमानमपि किमुच्यते। सादृश्यज्ञान-मुपमानमित्येके तन्न स्मृतावपि प्रसङ्गात्। अनुभव इत्यभिधाने च सदृशाविभावितोन्द्रिय-जेऽपि प्रसङ्गात्। सोऽपि गवयो गवा सदृशो गवयत्वात् गवयान्तरवदित्यनुमानस्यापि तत्त्वा-

पत्तेः। एवमाप्तोक्तिजेऽपि। किञ्चोपमिति-लक्षणमिदमुपमितिकरणलक्षणं वा स्यात्। नाद्यः सादृश्यस्योपमेयत्वापत्तेः। सदृशे चोपमेयव्यवहारेऽस्ति चन्द्रोपमेयं मुखमित्यादि सदृशमितिः सेति चेन्न अक्षादिकरणसम्भवे तदुदाहरणमङ्गेः। नापि द्वितीयः सादृश्य-ज्ञानस्य सर्व्वस्यासम्भवात् प्रमाणान्तरवत्प्रमा-णान्तरव्यापारफलजनकतायां दर्शयितुमशक्य-त्वात्। नच सादृश्यमनुगतमस्ति मुखसादृश्यस्य हस्तसादृश्यस्य च भेदेनैवोपलम्भात्। नच सा-दृश्यरूपत्वमनुगतं तेष्वपीत्यदोषः। तथापि सादृश्येन सह सादृश्येऽनेकस्यत्वादौ सादृश्य-रूपत्वाश्रिते सादृश्यरूपत्वस्याश्रयणाभ्युपगमे परस्पराश्रयभावोऽनभ्युपगमे वाननुगमः। तयोः सादृश्यानभ्युपगमे वान्यत्रापि तथापत्तेः। किञ्च वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वमेवं स्यादविशेषात्। एवमेवाभ्युपगमे च परि-गणितप्रमाणाधिक्यप्रसङ्गो वा सादृश्यबुद्धेरपि वा परिगणितेष्वेवान्तर्भावः स्यादिति। अप्र-तीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिः

रुपमानमित्यपि न आप्तवाक्यादपि तथा प्रमितेः । यत्र तद्व्यापारोनास्तीति चेन्न सचायञ्च अभिन्नाविितिवत् सचायञ्च सदृशाविति पूर्वप्रतीतस्य प्रतीयमानेन सहैवैन्द्रियकसादृश्यप्रतीतावपि प्रसङ्गात् । इन्द्रियासम्पृक्तस्येति चेन्न प्रत्यक्षतो गोगवयसादृश्यं प्रतीत्य सापि च गौ गवयेन सदृशी गोत्वादियमित्येत्यनुमितावपि प्रसङ्गात् । अलिङ्गजापीति चेन्न नन्वेवं प्रत्यक्षानुमानशब्दानुत्पत्तौ सतीत्युक्तं स्यात् । तथा च विशेषणमेव समर्थमित्यप्रतीयमानस्येत्यादि व्यर्थञ्च । नोपादेयमेव पदान्तरमिति चेन्न अर्थापत्तेरवश्यं सम्भवात् तेन सादृश्येतत्सादृश्यस्यानेन सादृश्यं तत्सादृश्यव्यतिरेकेणानुपपद्यमानत्वात् । अन्यथा अल्पयाप्रत्ययोत्पत्तिविषयं प्रमाणान्तरमापद्येत । तस्मादयं ह्रस्व इति प्रतीते अस्मात् स दीर्घ इति चान्यथा वातमा प्रमा स्यात् । अर्थापत्तिं प्रमाणान्तरमनिच्छतापीयमर्थापत्तिरनुमानेऽवान्तर्भाव्या पृथक्प्रमाणीकर्त्तव्या वा । एतेनाप्रतीतगवयगतान्तरसामान्यस्योदृष्टान्तानुमाना-

सम्भवात् गवयेनानेन सदृशी सा गौरिति-मितिरुपमितिरित्यपि व्युदस्तम्। तथैतत्सादृश्यस्यैतेन तत्सादृश्यं विनानुपपत्त्यैव सिद्धेरिति। अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमित्यपि न अस्मृतसङ्गतेरेवम्भूतोपमित्यव्यापनात्। अस्मृतसङ्गतीत्यभिधेयमिति चेन्न अनुभूतकालान्तरप्रस्मृतसङ्गतेरव्यापनात्। अस्मर्य्यमाणा इति चेन्न कदाचिदस्मर्य्यमाणतायास्तत्रापि सम्भवात् सर्व्वदा अस्मर्य्यमाणतायाः क्वचिदप्यसम्भवात्। उपमितिप्राक्काल इति चेत्यादेवैतद्यद्युपमितिर्लक्षिता स्यात् तदर्थमेव तु क्रन्दनमिदम्भवतः। किञ्च सर्व्वैरनवगतसङ्गतित्वस्य प्रकृतेऽप्यसिद्धेः केनाप्यनवगतसङ्गतित्वस्य वाक्यज्ञेऽपि सम्भवात् उपमानेति च पर्व्वनिरस्तम्। यस्याः प्रमितेर्येन प्रमाणेति चाभिधाने अनुगतरूपाभावात् व्यक्तौ पतनेन लक्षणेऽननुगत्यापत्तेः। संज्ञेत्यप्याकुलं गोसदृशो गवयः प्रायः कानने सञ्चरति दृश्यत इति श्रुतवाक्यस्य काननपदादिविदितसङ्गते गवयपदाविदितसङ्गते·

ष्टासंज्ञासंज्ञिसम्बन्धप्रतिपत्तिकालायासीदृशप्र-
तिपत्तौ गतत्वेनातिव्यापकत्वात्। विनापि
वा प्रायः शब्दमभिहितस्य तस्यानुसन्धाने प्र-
सङ्गः। तत्र काननसंज्ञासंज्ञिसम्बन्धावधारणे-
ऽप्यन्यत्रैव पदान्तरसमभिव्याहारोत्थाया अन्य-
थानुपपत्तेः प्रमाणत्वात् न तूपमानस्य। उप-
मेयसंज्ञासमभिव्याहृतेतिविशेषणे च पूर्व्वक
एव निरासः। वाक्यार्थेत्यपि तादृगेव प्रति-
पत्तिकालास्मृतातिदेशवाक्यगतकाननादिपदा-
र्थस्य तथाविधप्रत्ययाव्यापनात्। वाक्यैक-
देशस्यापि वाक्यत्वेन विवक्षितत्वे सदृशोगवय
इत्यादि स्मारिणोऽपि प्रत्यये प्रसङ्गात्। प्रती-
त्युत्पत्तिं प्रतिप्रयोजकीभूतं यावत्तावद्वाक्यं विव-
क्षितमिति चेन्न अन्तर्भावितवनाधिकरणता-
दृशप्रतिपत्तिं प्रति तस्य प्रयोजकत्वात्। उप-
मितिं प्रतीति तु पूर्व्ववन्निरस्तमिति। यावत्
संज्ञासंज्ञिवृत्त्यौपयिकं तावद्विवक्षितमिति चेन्न
लक्षणसहचरितसंज्ञोपदेशार्थानुसन्धानेऽपि
प्रसङ्गात्। किञ्च यदा तर्कानुसन्धानविरहिणः
सत्यप्येवम्विधानुसन्धाने सादृश्यमेव गवयपद

प्रवृत्तिनिमित्तमिति सति फलमुत्पद्यते। तदा तस्याप्रमाणकरणस्यापि उपमानत्वमापद्यते प्रमाफलकमिति विशेषणप्रक्षेपपक्षे चानुसंहितरूपव्यवच्छेदान्नानुमित्युत्पादकेनाप्यतादृशानुसन्धानमुपमानं स्यात्। अव्याप्तविषयप्रमाफलकमिति विशेषणीयमिति चेन्न वस्तुगत्या अव्याप्तस्योपमेयेऽप्यभावात्। व्याप्ततयाऽनवगम्यमानस्येति च कृते यत्र तल्लिङ्गं तेन सह व्याप्तत्वावगतमुपमितिकरणमपि न व्याप्नुयात्। उपमेयेन सह व्याप्तत्वानवगतत्वोक्तावप्यनुमाने प्रसङ्गस्तदवस्थः। अनुमेयेन सहेति कृते च तदनपायादव्याप्तिस्तदवस्थैव। संज्ञासंज्ञिसम्बन्धप्रमितिकरणमिति चेन्न तथात्वासिद्धेः अर्थापत्त्यादितस्तत्सिद्धेर्वक्ष्यमाणत्वात्। अननुमितिजनकं तादृक् प्रतिसन्धानमुपमानमिति चेन्न तज्जातीयस्यानुमितिजनकत्वात् व्यक्त्यपेक्षायाञ्च जनकत्वस्य सामान्याकारपर्य्यवसायिनो नित्यं व्यक्तावसम्भाविततया अननुगमेन चायुक्तत्वादिति। किञ्च गोसादृश्यं विहाय गवयत्वजातौ गवयशब्दार्थता-

प्रतीतिः कल्पनालाघवं तर्कमपास्य न स्यादिति तदुपन्यासमस्थितौ किमानुमानिकत्वेव तव गवयत्वस्य गवयपदवाच्यताप्रमितिरियं नेष्यते। सम्भवति हि प्रयोगः विमतिपदं गवयशब्दप्रवृत्तिनिमित्तं तथात्वे तर्कोण विपर्य्ययक्रियमाणविपर्य्ययैकत्वात् न यदेवं नतदेवं यथा गोत्वं तथा चेदं ततस्तथेति। नह्यस्ति सम्भवो-मूलशैथिल्यादिदोषविरहितर्कनिवेदितविपर्य्ययस्यार्थो नच तथेति। अथवा गवयपदस्य सम्भवत्प्रवृत्तिनिमित्तान्तरमनुपपद्यमाना प्रोक्तगोसादृश्यसामानाधिकरण्यमर्थाद्गवयत्वप्रवृत्तिनिमित्तकतामाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाणमस्तु। सा च त्वया व्यतिरेकोऽन्यत्व परेण पृथगेवावश्यं प्रमाणनीयेति।

शब्दोऽपि क उच्यते। आप्तवाक्यं शब्दः प्रमाणमिति हि न युक्तं विकल्पानुपपत्तेः। तथा हि कोऽयमाप्तो नाम। यथादृष्टवादीति चेन्न भ्रान्तिप्रतिपन्नवादिवाक्येऽपि प्रसङ्गात्। प्रमाणदृष्टेति विशेषणे च तथा भूतस्यान्यथावादव्यापनात्। यथाप्रमाणेति करणे चांशे तथा-

भूतवादिवाक्यस्यायथार्थस्यापि व्यापनात्। यावद्यथाप्रमाणदृष्टे निरुक्तौ च प्रायेणातथाभूतत्वादेव लक्षणानां तदव्याप्तेः। न हि यावत्प्रमितं तावदभिधीयते यथाप्रमितस्यैव च वक्तुर्वाक्यमितिव्याकारे च युधिष्ठिरवाक्यस्याप्यनेवम्भूतत्वेनाव्याप्त्यापत्तेः। तत्र विषय इति विशेषणे च विशेषरूपस्य विषयस्यासाधारणत्वेनाव्यापकत्वापातात्। अथ निर्दोषस्य वाक्यं तच्चेति चेन्न सदोषस्य नास्ति घट इत्यभिधित्सतोऽस्ति घट इति दैवान्निर्गतयथार्थवाक्याव्याप्तेः। तत्प्रमाणं न भवत्येवेति चेन्न पूर्व्वमुक्तोत्तरत्वात्। प्रवृत्तिसामर्थ्येन प्रामाण्यावधारणसम्भवादापाततः सन्देहेऽप्यदोषात् सामान्यतोनिर्दोषत्वस्य भीमार्जुनेऽप्यभावात् विशेषतस्तथात्वस्यासाधारण्यपर्य्यवसायित्वात्। यथार्थवाक्यं शब्दः प्रमाणमित्यत्र को दोष इति चेन्न पूर्व्वोक्तयाथार्थ्यदूषणानि तावत्प्रथमः। यथार्थत्वविशेषणस्य व्यवच्छेदकत्वाव्यवच्छेदकत्वयोः पूर्व्ववद्दोषस्य द्वितीयः। वाक्यत्वानिरुक्तिश्च तृतीयः।

तथा हि किमिदं वाक्यं नाम। एकार्थाव-

च्छिन्नपदसमुदायो वाक्यमिति चेन्न एकत्वविषयत्वावच्छिन्नत्वानां वाच्यानि दूषणानि तावत्सन्तु पदपदार्थन्तु चिन्तयामः। सुप्तिङन्तं पदमिति केचित् वर्णा विभक्त्यन्ताः पदमित्यन्ये। तत्र नाद्यः प्रत्येकं मिलितस्य चाव्यापकत्वात् पृथक्प्रवृत्तिनिमित्ततायाञ्च वाक्यलक्षणाव्यापकत्वापातात्। नापि द्वितीयः विभक्त्यर्थस्यानुगतस्यासम्भवात् विभक्तिरित्यनेन सुप्तिङा प्राग्दिशोऽविभक्तिरित्यनेन च तसिलादेः पृथक् पृथगेव विभक्तिसंज्ञा विधानात् शब्दसाम्येन च लक्षणायोगात्। किञ्च वर्णा इति बहुत्वस्य विवक्षितत्वे अहमित्यादेरपदत्वप्रसङ्गः। अविवक्षितत्वे देवदत्त इत्यन्ताकारस्य पदत्वापातः तस्य विभक्त्यन्तत्वात्। सार्थकस्तथेति चेत् भवतीत्यादौ शवकारादीनां पदत्वप्रसङ्गः शपः सार्थकत्वात्। यतो विहिता विभक्तिस्तदिति चेन्न शवकारं परित्यज्य पदत्वप्रसङ्गात्। तन्मध्य पतितत्वाच्छवकारोऽपि गृह्यत इति चेत् तर्हि यत्र विभक्तिर्विधीयते तत्र तद्विभक्तिमध्यपतितञ्च पद-

मिति वा विवक्षितं यत्र विभक्तिर्विधीयते तत्त-द्विभक्तिमध्यवर्त्तिसहितं पदमिति वा। आद्ये शब्दकारस्यापि पृथगेव पदत्वप्रसङ्गः लक्षणस्य चाव्यापकता। द्वितीये देवदत्त इत्यस्यापद-त्वप्रसङ्गः मध्यवर्त्तिनोऽभावे मध्यवर्त्तिसहित-विशेषणाभावात्। क्वचिन्मध्यवर्त्तिसहितस्य क्वचित्केवलस्य चेति यथासम्भवमिति चेन्न एकानुगतस्यानभिधाने लक्षणस्याव्यापकता-पत्तेर्दुर्निवारत्वात्। किञ्च देवदत्तास्त्वित्यपि पदं स्यात्। अथापशब्दोऽयं पदत्वे सति कत्वादे-र्विधानस्यावश्यम्भावित्वादिति चेन्न यतएवाय-मपशब्दस्ततएव भवतो दोषः प्रसज्यते अप-शब्दोऽपि पदलक्षणं गतमिति। तस्मात्पाणिनि-नाचार्य्येण शब्दसिद्ध्यर्थं पदसंज्ञेयं कत्वादि-विध्यनुरोधेनापशब्दरचनायामल्पैव कृता नदी-संज्ञावत्। ननु लौकिकपदव्यवहारसिद्ध्यर्थं साधु शब्दविशेषे ततश्च तस्यान्यदेव लक्षणं वाच्यमन्यथाद्यार्चीनन्दनोदीरित नदीसंज्ञा-प्रत्यभिज्ञायां पार्थः प्रार्थयमानः काननस्थली-मलीकाभिमानो भवानीहेत। अथोच्यते विम-

तयत्वमेव सर्व्वलक्षणप्रवृत्त्या निष्पन्नं व्यावहारिकं पदमिति लक्षणमस्तु । मैवम् । सर्व्वलक्षणप्रवृत्तेः सर्व्वत्राभावात् । सम्भवत्सर्व्वलक्षणप्रवृत्तेरिति चेन्न सम्भवत्त्वं तत्काले कालान्तरे वा विवक्षितम् । आद्ये देवदत्तस्त्विति पदं स्यात् रुत्वविधानकाले विसर्गस्यासम्भावितत्वात् । कालान्तरेऽपीतिपक्षे देवदत्त इत्यपि पदं न स्यात् इत्यादिपदपूर्व्वकालभाविनो यद्द्वयलोपादेरकरणात् । शब्दान्तरसन्निधिव्यतिरेकेण यद्भावि लक्षणं तद्विवक्षितमिति चेन्न जीविकाकृत्य व्याचष्ट इत्यर्थे जीविकां कृत्वा व्याचष्ट इति प्रयुज्यमानं वाक्यं स्यात् । एकार्थावच्छिन्नपदसमुदायस्य तत्रापि गतत्वात् कृत्वेत्यनेन सम्बद्धस्य जीविकामित्यस्योक्तपदलक्षणेन संगृहीतत्वात् । यदुपाधिका यल्लक्षणप्रवृत्तिस्तदुपाधिसम्पत्तौ तेन निष्पन्नं तयेति चेन्न यत्र नास्त्युपाधिसम्पत्तिस्तत्र केवले तस्यां सत्यामित्यस्याभावादपदत्वापत्तेः । सत्यामस्यायां यस्य लक्षणस्योपनिपातस्तत्सर्व्वसम्पत्तौ विभक्त्यन्तं पदमिति चेन्न यस्तम्भव-

स्थायामित्यवस्थानां भिन्नभिन्नाकारेण घटा-
मर्थे तत्तदवस्थाननुगमादव्यापकतादोषः अव-
स्थानामैक्यञ्च विवक्षितमसम्भावितञ्च। सर्व्वदा
सर्व्वावस्थाविषये लक्षणप्रसङ्गादिति। स च
भवति भवतो वा पटः पटाविति वा घटं घटा-
विति चेत्यतिव्याप्तिः। एतेनापौरुषेयं वाक्यं
तदित्यपि निरस्तम्।

का पुनरर्थापत्तिः। अन्यथानुपपत्तिरिति
चेन्न यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेः। सिद्धे-
नानुपपत्तिरिति चेन्न विशेषणाव्यवच्छेद्याप्रतीतौ
तद्वैयर्थ्येन तदनुपादाने सर्व्वथानुपपन्नार्थतायां
फलविरोधात् केनाप्यनुपपन्नार्थत्वे साध्य-
सिद्ध्यपर्य्यवसानात्। प्रमाणयोर्व्विरोधानुप-
पत्तिरिति चेन्न असिद्धत्वात् प्रमाणत्वेनाभि-
मन्यमानयोरिति चेत् अभिमतेर्म्मिथ्यार्थत्वे-
ऽतिप्रसङ्गात् ज्ञानार्थत्वेऽप्युक्तदोषानिवृत्तेरेव।
अनिर्णीयमानप्रामाण्याप्रामाण्ययोरित्यत्रापि
तथैव तथा हि सत्प्रतिपक्षेऽपि तस्य तद्रूप-
भावादप्रमाणत्वापत्तेः। तत्र विरोधेन-
व्याप्त्यभावो प्रमाणत्वविरहः यत्र तु नैवं तत्र-

ञ्चितमिति चेन्न सत्प्रतिपक्षवदन्यथापि विरुद्धार्थत्वेनैवाभासत्वाविशेषात् । तर्कयोर्विरोधेऽपेक्षित इति चेन्न मिथोऽविरोधेन तर्कयोरप्याभासत्वात् । विशेषप्रवृत्तप्रमाणार्थं प्रतिक्षेपविषयत्वसंशयोऽविशेषप्रवृत्ततद्विपरीतार्थप्रमाणस्य विरोध इति चेन्न विशेषविषयप्रमाणबोधितवैपरीत्ये सति तद्विरुद्धार्थतांशे संशयस्य दुर्ब्बलस्यानवकाशत्वेनाविशेषप्रवृत्तप्रमाणविषयतां तदीयां गोचरयितुमप्यसामर्थ्यादेव । अविशेषप्रवृत्तस्य प्रमाणस्य तद्विपरीतार्थविशेषविषयस्य च प्रमाणस्य विषयोस्तद्विपरीतत्वविशेषणाप्रतीत्यङ्गीकारलब्धायां परस्परविरुद्धत्वप्रतीतौ धर्म्मिणोर्व्विरुद्धधर्माध्यासस्य भेदस्य विरोधविवेचनस्फुटतद्गर्भप्रवेशतया तत्सहकृतस्य तन्नान्तरीयकस्य वान्यत्वेनान्यतएव प्राप्तेः । किञ्चाविशेषप्रवृत्तस्यैव तस्य किंविशेषविषयत्वम् । अथ सामान्यतः प्रवृत्तस्य नान्तरीयकतया प्रागेव विशेषविषयस्य विशेषविषयत्वेनाज्ञातस्य विशेषविषयत्वं वा सामान्यस्य तद्विषयस्य विशेषः स्वतः तद्विपरी-

ज्ञातविशेषगतं किमपि धर्मान्तरमिदानीं प्रमीयते। नाद्यः अर्थापत्तेर्भ्रमकरणत्वापत्तेः। न द्वितीयस्तदनुव्यवसायोत्तरे स्तद्विषयाप्रतीत्यसम्भवात्। न तृतीयः सामान्यस्यानन्तर्भावितान्वयस्य प्रत्येतुमशक्यत्वात् प्रागेव तत्सिद्धेः। नापि चतुर्थः तर्हि प्रतीयमानविरोधिव्यक्तिविभक्तत्वमन्यद्वा स्यात्। नान्त्यः तत्प्रतीतौ सामर्थ्यानुपदर्शनेनानियमप्रसङ्गात्। न प्रथमः अननुगतानुगतजातिव्यक्तिचाक्षुषाचाक्षुषादिव्यक्तिगन्धादितादात्म्यवादिनये तदुभयप्रमातादात्म्यविषयताव्युदासं विना विरोधाशङ्कायामनिकायलस्यैवासिद्धेः तदुभयप्रतीतौ च तदवधारणे प्रागेव तत्प्रतीत्यर्थापत्तेरनुवादतापत्तेः।

योग्यानुपलम्भोऽभावप्रमाकरणमित्यप्ययुक्तं प्रमाभावस्य तथात्वे भ्रमानुदयप्रसङ्गात्। उपलम्भाभावमात्रस्य तथात्वे शङ्खधवलिमप्रतिसन्धानवतः पीतभ्रमानुदयप्रसङ्गात्। कालभेदात्तथाविरोध इति चेन्न तथापि संस्कारोत्पत्त्योरन्योन्याभावाग्रहणप्रसङ्गात् तादा-

त्मत्वस्य स्वरूपमात्रानतिरेकात् अभावस्फुरणे च तत्प्रतिभासस्य ध्रौव्यात्। किञ्च योग्यता हि तत्तदविनाभूतान्यप्रतियोगिप्रमापकसा-कल्यमिष्यते तथा सति च यत्र भावोपलम्भ स्तत्राप्यभावप्रमा स्यात्। न हि तत्र हेतु व्यतिरेकेणैव वा सत्त्वेव वा तदभावप्रमोत्-पत्तौ। तत्तदविनाभूतविरुद्धसहितः स त-थेति चेन्न तदविनाभूतव्यतिरेकात् व्यति-रेकेणैवान्यथासिद्धसन्निधेरपि हेतुत्वाङ्गीकारे प्रमाणाभावात्। अत एवालोकस्याप्यन्वये आलोकान्तरवतावयवेनावयविना वा आलो-केनान्यथासिद्धसन्निधिरहेतुरित्यालोकाभाव-ग्रहे सा नापेक्ष्यते। अर्थाप्रयोगस्तु नार्थ व्याप्तोऽसत्यैक्यात् तद्विरुद्धसहितः स तथेति चेन्न इन्द्रियसन्निकर्षस्य हि प्रतियोग्यनुपलम्भे तावद्धेतुताङ्गीक्रियते तत्र किं सन्निकर्षव्यति-रेकेकार्य्यान्वयोदाहरणमेष्टव्यं न वा न यदि तदा सन्निकर्षस्य हेतुतैव कुतोमन्तव्याऽन्यथैव कार्य्योत्पत्त्युपपत्तेः। एष्टव्यञ्चेत्तर्हि तत्रैवोदा-हरणे व्यवधायकेनेन्द्रियसन्निकर्षशून्ये पर-

मार्थतस्याभाववत्युक्तकारणसम्पत्तेरभाव प्रमा स्यात्। अत्र व्यवधायकाभावः प्रतियोग्युपलम्भको नास्तीति चेन्न सन्निकर्षव्यतिरेकस्य प्रमाव्यतिरेकप्रयोजकत्वावधारणोदाहरणमेव तर्हि तन्न स्यात्। व्यवधायकस्य सन्निकर्षविरोधेनैव प्रमा विरोधित्वमिति चेत् तर्हि व्यवधायकाभावः सन्निकर्षोत्पत्तौ कारणं न त्वभावप्रमाविशेषोत्पत्ताविति स्थिते स प्रसङ्गस्तदवस्थ एव। नच सन्निकर्षाभावादेव तदानीमुक्तकारणासम्पत्तिः प्रतियोगिसन्निकर्षस्याभावप्रमोत्पादकत्वे नित्यं तदनुत्पत्त्यापत्तेः। अतएव नाव्यवधानमधिकं कारणमेष्टव्यमिन्द्रियसन्निकर्ष एव तदुपपत्तेः। न चाश्रयसाक्षात्कारोऽपि प्राङ्नास्तिताग्रहादौ व्यभिचारात्। ननु व्यवधायकसद्भावेऽपि घट परमार्थतोऽस्त्यभाव स्वोक्तकारणादभावावधारणमस्त्येव को विरोधो न तावद्भावयोगिन्यपि तावता तद्विरहप्रमा प्रसज्येत। तर्हि प्रतियोग्यभावसहितोऽनुपलम्भ एवाभावप्रमाणमस्तु कृतंहि योग्यताविशेषणनिवेशनव्यसनम्।

योग्यताविशेषणाप्रक्षेपेऽनुपलम्भमात्रतो वस्तु-
गत्या प्रतियोग्यभाववत्यपि नाभावनिश्चयः कदा-
चित्तु संशयो जायते तत्कथं तथाङ्गीक्रियत इति
चेत् तर्हि व्यवधानेष्वेवमेवेति योग्यताविशेषण-
प्रक्षेपेऽपि तुल्यम्। अपि च मेयस्य वास्तवं
सत्त्वं प्रमाणकोटावनिवेशार्हमेव मेयवस्तुसत्त्व-
निर्द्धारणार्थमेव हि प्रमाणं प्रमाणविवेचनं
विचारकाणाम्। अन्यथानुमाने व्याप्तावुपाधि-
निरासायासो व्यर्थः स्यात् व्याप्तपक्षधर्मता-
ज्ञानमात्रस्यैव कारणत्वाङ्गीकारेण सौस्थ्यात्।
प्राङ्नास्तिताप्रमितौ च यद्यभावप्रमाणतां
मन्यसे तर्हि सा न स्यात्। तवेदानीं जायमा-
नाभावप्रमोत्पत्तावभाववास्तवसत्ताविरहस्या-
पीदानीं क्वचित्सम्भवात्। फलविषयकालिका-
भावोपलक्षिताश्रयादेः कारणकोटिनिवेशने
विशेषाभावात्। तदुपलक्षितस्यैव विशेषणस्य
विशेषत्वेऽतिप्रसङ्गात्। तथापि सामान्यतो-
विशेषाभावेऽसिद्ध इति चेन्न तस्य सत्त्वे निर्व्व-
चनापातात्।

कस्तावदयमसिद्धो नाम। तथा हि व्याप्तत्व-

पक्षधर्मताभ्यामप्रमितोऽसिद्ध इत्यलक्षणं हेत्वाभासान्तराणामपि ह्यसिद्धप्रवेश एवं सति स्यात्। व्याप्तिं पक्षधर्मतां तत्प्रमितिं वा न विरुध्यतां हेतुदोषत्वाभावात्। ननु नेदमोदृशं तथा हि केचिद्दोषा व्याप्तिपक्षधर्मतातत्प्रमितिविरहात्मानः केचित्तु व्याप्त्यादिलिङ्गभङ्गभूताः प्रतिबन्धकतया प्रमित्युत्पत्तिं विरुन्धानाश्च केचिद्दोषमयं भजन्ते। तत्र प्रथमे तावदसिद्धमध्यमध्यासते। तद्यथा व्याप्यत्वासिद्धः सोपाधिकरूपः। अनौपाधिकसम्बन्धिता हि व्याप्तिः सा सोपाधिता वानुपाधिताविरहरूपैव एवमधिकरणासिद्धिरप्यसिद्धावेवान्तर्भविष्णुः। पक्षपदोपात्तस्याश्रयस्य व्यतिरेकरूपा हि सा सिद्धसाधनमपि तथैव सिषाधयिषितधर्मविशिष्टो हि धर्मी पक्ष उच्यते। यत्र सिद्धं न तत्र सिषाधयिषास्ति ततो विशेषणाभावापत्तौ विशिष्टस्य पक्षरूपस्य तत्राभावः। न च वाच्यं यथा सव्यभिचारत्वाद्भग्नव्याप्तिकमिति पृथगेव सव्यभिचारस्य दोषत्वं तथासिद्धत्वाच्च न सिषाधयिषा तास्तीति

सिद्धत्वस्यापि पृथगेव दोषत्वं प्राप्नोति लिङ्ग-द्वारेणासिद्धिपर्य्यवसायित्वात्। अन्यथा व्याप्त्यादिविरहपर्य्यवसायितामात्रेण सव्यभिचारत्वादीनामप्यसिद्धावेवान्तर्भावः स्यादिति। यतः सिषाधयिषा भावो न प्रतिपन्नासिद्धत्वा-ल्लिङ्गाद्गम्यते। किं नामेच्छाभावस्य तस्य तस्य यथादर्शनं प्रत्यक्षादिनाधिगम इच्छैव तु तत्र यन्नास्ति तत्र सिद्धत्वं प्रयोजकमित्येतावन्मात्रेण सिद्धत्वमुपन्यस्यते सिद्धसाधने नत्विच्छा-भावमनुमातुं लिङ्गतयेति एवं स्वरूपासिद्धि-रपि पक्षधर्म्मताविरहरूपैव। ये तु व्याप्ति-पक्षधर्म्मताविरहलिङ्गभूतास्तेऽसिद्धतः पृथगेव हेत्वाभासाः। तद्यथा विरुद्धः साध्य विपरीत-व्याप्तः तत्र साध्यव्यतिरेक व्याप्तता हेतो र्न साध्यव्याप्तताभावः। किन्नाम साध्यव्यतिरेकेण सहानौपाधिकासम्बन्धोऽन्यएवासौ इत्यमेव पक्षधर्म्मताविरहात्मापि नायम्। किन्नाम ततः साध्यव्यतिरेकेण सह निरुपाधित्वसम्बन्धात् तत्र साध्यव्याप्तिरस्य नास्तीत्यनुमीयते। तथा सति च साध्यव्याप्तिव्यतिरेकलिङ्गं सद्विरुद्धः

पृथगेव हेत्वाभासो भवति। एवमनैकान्तिकोऽपि न व्याप्तिव्यतिरेकरूपः किन्तु तल्लिङ्गमेव। तथा हि हेतोरन्वयस्य व्यतिरेकस्य वा व्यभिचारो न साध्यसाधनव्याप्तिविरहात्मा किन्नाम व्यभिचारो हेतोः साध्यव्याप्तिविरहं विना न सम्भवतीति लिङ्गभावेन व्याप्तिभङ्गं बोधयति। यदि हि निरुपाधिः साध्येन सम्बन्धोऽस्य भवेत्कथं व्यभिचरितुं शक्नुयात्। तस्माद्व्याप्तिविरहलिङ्गं व्यभिचारो न तु व्याप्तिविरहः पक्षधर्म्मताविरहरूपता त्वनैकान्तिकस्यासम्भावितैव सत् प्रतिपक्षतायाञ्चानवगम्यमानविशेषप्रतिपक्षप्रतिरुद्धतया यत्साध्यनिश्चयाजनकत्वं हेतोः स प्रतिबन्धकसद्भावे कार्य्याजनकत्वमितरकारणसाधारणो वस्तुस्वभावः। तस्य व्याप्तिपक्षधर्म्मताविरहरूपा असम्भावितैव। बाधस्तु साधनवति पक्षे साध्याभावबोधनात्मा भवन्नपि न व्याप्तिविरहावगमरूपः। सामान्यतोऽनौपाधिकसम्बन्धरूपा हि व्याप्तिः। साधनवति च साध्यविरहो न सोपाधिता साध्याविरोधिस्वभाव-

वात्तस्याः। नाप्यसौ सामान्यतः साध्यसाधन-सम्बन्धस्य विरुद्धरूपः बाधे सत्यपि सामान्येन साध्यसाधनयोः सम्बन्धस्य दृष्टान्तावगतस्यानपलापात् बाधस्य किञ्चिद्विशेषविषयत्वात् सामान्याकारपरिगृहीतस्य सम्बन्धस्य विशेषान्तरसाद्गुण्ये पर्य्यवसानाऽविरोधात्। तस्माद्विशेषबाधे न सामान्यतः सम्बन्धस्य सोपाधिता अनुमीयते निरुपाधित्वे बाधानुपपत्तेः। यथाह बाधाद्वोपाधिरुन्नीयतेऽन्यथा वेति न कश्चिद्विशेष इति। अन्यस्तु सत्प्रतिपक्षवद्-बाधस्यापि प्रतिबन्धकत्वमेव तेन बाधे सति प्रतिबद्धत्वान्निश्चयं न करोति हेतुरिति व्याप्तिपक्षधर्म्मतादोषमनालोच्य अन्यथैव बाधस्य दोषत्वमित्याह। तस्माद्व्याप्तिपक्षधर्म्मता प्रमितत्वानां यत्र साक्षादेव विरुद्धस्योद्भावनं तत्राऽसिद्धः। यत्र तु व्याप्त्यादिविरुद्धलिङ्गोपन्यासः सत्प्रतिपक्षोपन्यासो वा तत्रान्यो हेत्वाभासः। ननु सोपाधित्वादयोऽपि यतोऽवगम्यन्ते तत् कुतः पृथक् दूषणं न भवत्यनैकान्तिकत्वादिवत्। नैवम्। अनैकान्तिकान्तिक-

त्वादेर्व्याप्त्यादिविरहबोधने लिङ्गभावनियमात् पृथगुपन्यासः। सोपाधितादेस्तु प्रत्यक्षादपि प्रतीतेर्न लिङ्गभावनियतं तत्र प्रतिपादकं किञ्चिदस्ति। नच वाच्यं यत्र लिङ्गात्सोपाधितादेः प्रतीतिरतीन्द्रियप्रभृतिविषये तत्र लिङ्गं पृथगेव दूषणतयाभिधीयताम्। नन्वनैकान्तिकत्वादिकमपि सार्व्वत्रिकं व्याप्तिविरहलिङ्गमिति पृथग्भावाभिधानमयुक्तमिति। अनैकान्तिकत्वादिषु तेषां लिङ्गानां कण्ठत एव निर्दिष्टत्वप्रसङ्गात् पृथक् पृथगेव वाभिधानमनवस्थानपरिसङ्ख्येयत्वादिति। यद्यपि स्याद्धेतुं तदनभिधानस्य। नन्वनुचितमुच्यते व्याप्त्यादिविरहलिङ्गतयानैकान्तिकत्वादीनां पृथक् दूषणत्वमिति यतो व्याप्तिपक्षधर्म्मतोपेतलिङ्गप्रमितिसाध्यानुमिति प्रातिकूल्यान्न भवेत्। यतश्च सा न भवति तदेव तस्यां दूषणं वक्तुं युक्तमिदमनुमित्युत्पत्तिकारणमिह नास्तीति। नच व्याप्तिपक्षधर्म्मते तत्प्रमितिञ्च विहायान्यत्तदुत्पत्तिकारणमस्ति यद्दर्शनयोग्यं तस्मादनुमितिदोषप्रतीतिकारणत्वमने-

कान्तिकत्वादीनां न तु साक्षाद्दोषत्वं दोष-प्रतिपादकतयापि च दोषत्वं साक्षाद्दोषत्व-मनुपजीव्यागस्याभिधानमिति प्रधानदोषस्यैव दोषतयोद्भावनं युक्तं न सव्यभिचारत्वादीना-मिति विभागस्तत्वमनर्थकमिति तात्पर्य्यं सत्य-मेतत्। साक्षाद्दोषत्वं प्रतिबन्धकस्य व्याप्त्यादि-विरहस्य वा विरुद्धत्वादीनान्तु तत्प्रमापक-तया यद्यपि दोषपक्षनिक्षेपस्तथापि विरुद्ध-त्वादयो यद्दोषप्रतिपादकतयोक्ता स्तदुद्भावन-स्यावश्यानुरोधात् व्याप्त्यादिविरहे तत्रोद्भाव्य-माने न हेतुर्गन्तुं शक्यते। अनैकान्तिकत्वादौ तूद्भाविते व्याप्त्यादिविरहोऽर्थाल्लभ्यते। व्याप्त्या-दिविरहव्यतिरेकिणानैकान्तिकत्वादेरनुपपन्न-त्वात्। तथा तस्माद्धीर्योऽयमित्युक्ते अस्मात् ह्रस्वः स इत्यर्थाल्लभ्यते न तु तत्र प्रतिपाद्यान्तरा-पेक्षा। तथेहापि निरग्नौ धूमोऽस्तीति प्रतिपा-दिते अग्निनासौ न व्याप्त इत्यर्थाल्लभ्यते। न हि सम्भवत्यग्निना च व्याप्तोऽसग्नौ चा-स्तीति। अतएवानन्त्यादतीन्द्रियोपाध्यादि-लिङ्गानां येषां पूर्व्वमनभिधानं समर्थितं तेषा-

मनभिधाने ऽयमपि हेतुः। तानि ह्युपाधि-
लिङ्गानि नार्थवशादुपाधिमनपेक्ष्यापि गम
यन्ति येन तेषां व्याप्तिर्नावधारिता तं प्रति
तत्प्रतिपादनमन्तरेणाप्रतिपादकत्वस्यापि स-
म्भवात्। अनैकान्तिकत्वाद्यवगतौ च व्याप्त्या-
दिविरहबोधाय न प्रतिपादनीयान्तरापेक्षा
कस्यचित्सचेतसः सम्भवतीति पूर्व्वपक्षसंक्षेपः।
एवमसिद्धलक्षणे व्यवस्थिते बाधोऽयमभिधी-
यते। एतेन कीदृशमसिद्धलक्षणं व्यवस्थापित-
तमायुष्मता भवति। व्याप्तत्वपक्षधर्म्मत्वाभ्या-
मप्रमितोऽसिद्ध इति तावत् विरुद्धादिषु ल-
क्षणं किन्नास्ति किं वास्ति। यदि नास्ति तदा
व्याप्तिपक्षधर्म्मताभ्यां प्रमिता विरुद्धादयः प्राप्नु-
वन्ति। अथास्ति तदा तेऽप्यसिद्धभेदाः प्राप्ताः।
अथैतस्मिंल्लक्षणे सत्यपि तेनासिद्धान्तर्भूताः
तर्हि लक्षणमिदमतिव्यापकमापन्नम्। अथ
यत्र व्याप्तिपक्षधर्म्मत्वाप्रमितत्वं साक्षादुद्भा-
व्यते तदसिद्धमित्युच्यते तर्हि लक्षणान्तर-
मिदमुक्तं स्यात्। नचैतदपि युक्तं यत्र व्याप्य-
त्वासिद्धे व्याप्तिविरहमात्रं प्रतिपाद्यते तत्र

व्याप्तिपक्षधर्म्मताप्रमितत्वानां ज्ञानं मिलितं नोद्भाव्यत इति नासावसिद्धः स्यात् । एवं सर्व्वासिद्धविशेषमुदाहृत्य प्रसङ्गो विधातव्यः । अथ प्रत्येकमिदं लक्षणं व्याप्त्यप्रमिततया साक्षादुद्भाव्योऽसिद्धः पक्षधर्म्मत्वाप्रमिततया वेति । तर्हि अन्योन्योदाहरणाव्याप्तेरव्यापकत्वमुभयोः । अथोभयोरप्यसिद्धविशेषलक्षणत्वादन्योन्यविषयाव्यापकता न दोषायेति मन्यसे न सामान्यलक्षणे निर्व्वक्तुमशक्ये कथमिदं विशेषलक्षणमपि घटते । अथानुमितेरसाधारणहेतुव्यतिरेकोद्भावनं सामान्यलक्षणमस्तु । नैवम् । सत्प्रतिपक्षोद्भावनं तथेत्यतिव्याप्तेः भावरूपतया हेतुविशेषणे च निरुपाधित्वव्यतिरेकोद्भावनाव्याप्तेः स्वरूपासिद्धिः सर्व्वप्रमाणसाधारणो दोष इत्यत्र तदुद्भावनाव्याप्तेश्च । अथोच्यते व्याप्तत्वपक्षधर्म्मताभ्यां प्रमितत्वव्यतिरेको यत्र साक्षादुपन्यस्यते सोऽसिद्ध इति इदमप्यलक्षणमव्यापकत्वात् । यत्र व्याप्त्यादिव्यतिरेक उपन्यस्यते तत्र वस्तुगत्या व्याप्तत्वप्रमितेर्व्यतिरेकोऽस्तु नाम नतूपन्यस्य-

तेऽपि प्रयोजनाभावात्। व्याप्तिव्यतिरेकदर्श-
नादेवानुमानाङ्गवैकल्यात्मनो दोषस्योद्भावन-
पर्य्यवसानात्। तस्मात्तत्र प्रमितत्वव्यतिरेको-
द्भावनं नास्तीत्यव्यापकत्वं दोषः। ननु विशे-
षणाद्यभावोऽपि वस्तुतो विशिष्टाभाव एवेति
नोक्तदोषः न यदि विशेषणाद्यधिकोऽविशिष्ट
स्तदा तदभावभेदोऽपि स्यात्। अथ नाधिक
स्तदा विशेषणाद्यभावान्यो वा विशिष्टाभाव-
[illegible]न। विशिष्टाभावस्यापि तथात्वे पृथगेव
विशिष्टाभावत्वादेस्तयोरित्यननुगम एव स्या-
योनुमित्यसिद्धव्याप्त्याद्यनुद्भावनादिति। अथ
रूपे यत्र व्याप्तत्वपक्षधर्मत्वप्रमिते व्यतिरेकः
साक्षाच्छक्योपन्यास स्तदसिद्धं शक्योपन्यास-
त्वस्यानुपन्यस्तेऽपि सम्भवान्नास्त्यव्यापकतेति।
नैतदपि युक्तं तथा हि शक्योपन्यासत्वं किं
शक्यस्वरूपनिर्देशत्वमात्रम् उत शक्यप्रमा-
पकत्वम्। आद्येऽनैकान्तिकादावपि व्याप्ति-
शून्यत्वं शक्यप्रतिज्ञासत्त्वेन। द्वितीयेऽपि यदि
साक्षादिति प्रत्यक्षेणेत्यर्थः तदा प्रत्यक्षेण प्रमा-
पणीयत्वं, व्याप्तिपक्षधर्मताप्रमितिविरहस्य-

प्रत्यक्षप्रतियोगिकाभावप्रत्यक्षतावादिमते विरुद्धादावप्यस्तीत्यतिव्याप्तिः। अन्यमते न क्वचिदपीति सर्वाव्याप्तिः। अथ व्याप्तिपक्षधर्म्मताविरहस्यापि प्रत्यक्षप्रमापणीयता विवक्षिता सा न युक्ता उक्तलक्षणवाक्यस्य व्याप्तिपक्षधर्म्मताविरहानभिधायित्वात् तद्विरहेऽपि तात्पर्य्याभ्युपगमे प्रत्येकसमुदितलक्षणताविकल्पेनाव्यापकत्वापातात्। अतीन्द्रियपक्षादिविरहे च विपक्षे तदभावादव्यापकत्वापत्तेः। एतेन यदि लिङ्गानपेक्षत्वं साक्षादर्थः सोऽपि निरस्तः। अथोच्यते यत्र व्याप्तत्वपक्षधर्म्मत्वप्रसिद्धेर्व्यतिरेकः प्रतिपादनीयान्तरानपेक्षतया तत्प्रमापकस्य लिङ्गस्योपन्यासव्यतिरेकेण शक्योद्भावनः तदसिद्धमिति नैतदप्युपपन्नम् अतिव्यापकत्वात् तथा हि विरुद्धादौ शक्यतेतानुद्भिपक्षवृत्तिदण्डभूततर्काभावात् सोपाधिताचगन्तुम्। यदाह यत्रानुकूलस्तर्को नास्ति सोऽप्रयोजक इति तस्मात्तेषामप्येवं लक्षणयोगित्वादसिद्धत्वप्रसङ्गः नच तादृशतर्काविषयत्वमपि प्रतिपादनीयान्तरानपेक्षव्याप्तिपक्ष-

धर्मितापनितिविरुद्वप्रमापकलिङ्गभूतमेवेति वाच्यं तथा सति विरुद्धत्वादिवत्तस्य हेत्वाभासान्तरत्वप्रसङ्गात्। अथोच्यते तथोपन्यासमानं तदसिद्धत्वमवतु साध्यविपरीतव्याप्तित्वादिना तु दृश्यमाणं विरुद्धाद्येव तत् उपन्यासप्रकारभेदाच्च भेदव्यवस्था हेत्वाभासानाम्। नह्येव गोत्वाश्वत्वादिवदत्यन्तासङ्करः दृश्यते। किं नाम प्रमाणप्रमेयभाववत् प्रकारासङ्करमात्रमिति तदप्ययुक्ताभिधानं सुव्यक्तं हि केन प्रकारेणासिद्धत्वमवति न तावदुक्तलक्षणेन तथा शक्योद्भावनत्वस्य विरुद्धोचितप्रकारेणोपन्यस्यमानस्य सम्भवात्। सर्वथा निष्प्रकारस्यासिद्धधर्मिणस्तदुद्भावनाशक्यत्वात्। नच तथा शक्योद्भावनत्वमप्युद्भाव्यते असिद्धे येन प्रकारभेदव्यवस्थितिरनेन भवेत्। नच शक्योद्भावनपदस्थाने उद्भाव्यमानत्वमिति कृते निस्तारः सोपाधित्वादुद्भावने प्रमित्यभावोद्भावनं व्यर्थत्वान्न क्रियत इति तदव्यापकत्वं प्रसज्यतेति प्रागेवोक्तत्वादिति। एतेनासिद्धः साध्यसम इति प्रत्युक्तं यथा कथञ्चित्साध्यसाम्यस्य सर्वसाधारणत्वात् साध्य-

विशेषस्य चोक्तप्रकारपर्य्यवसानव्यतिरेकेणान्यस्यासम्भवात् लक्षणान्तरेषु चोक्तदूषणप्रकारा यथासम्भवमिह योजनीया इत्यलं विस्तरेणेति।

अपिचासिद्धलक्षणविशेषणेन प्रमाणव्यवच्छेदकव्यतिरिक्तेन यद्व्यवच्छेद्यं तत् केनचिद्विरुद्धं केनचिदन्यदिति चेत्। विरुद्धमेव किमुच्यते तथा हि साध्यविपरीतव्याप्तो विरुद्ध इत्याहुः तत्र साध्यव्यतिरेकेण हि व्याप्तिः कार्त्स्न्येन वा अनौपाधिको वा स्वाभाविको वा सम्बन्ध इत्याद्युक्तिभिः सविशेषणः सहभाव एव निरुच्यते। तथा सति च साध्यव्यतिरेकेण सामानाधिकरण्यमेव विशेषणाविशेषयुक्तं विरुद्धमित्युक्तं स्यात्। यदा चैवं तदा साध्यव्यतिरेकसामानाधिकरण्यमेव हेतोरगमकत्वे समर्थमिति तन्मात्रमुद्भाव्यं वृथा विशेषणप्रक्षेपः। तथा चानैकान्तिक एवायं स्यात्। ननु साध्यव्यतिरेकसम्बन्धो यद्यपि विरुद्धानैकान्तिकयोर्द्वयोरप्यस्ति तथापि वस्तुगत्या स्वाभाविकोऽसौ विरुद्ध एवेत्येतावन्मात्रविशेषविवक्षया विरुद्धस्यानैकान्तिकाद्भेदोपन्यासः।

मैवम् । दृष्टोत्तरत्वात् वस्तुगत्या सव्यभिचारं विशेषो नोद्भावनार्ह इत्यपेक्षणीय इत्युक्तम् । तथा हि नैतस्य साधकमेतत्साध्यं प्रति विरुद्धत्वादित्यभिधीयमाने विरुद्धशब्दार्थनिरुक्तौ विशेषस्याधिकस्योक्तन्यायेन दुष्परिहरत्वात् । अत एवानैकान्तिके सन्देहेन प्रत्यवस्थानं विरुद्धे तु व्यतिरेकनिश्चयेनेति विशेषादनयोर्भेदेनोपन्यास इत्यप्यनवकाशम् अनुमितिहेतुव्यतिरेको हि हेतुदोषोऽनुमितिहेतुश्चैकोऽव्याप्तिस्ततस्तदभावस्य दोषत्वात्तावन्मात्रं ज्ञाप्यं तच्च हेतुविपक्षसम्बन्धोद्भावनमात्रादेव गम्यते तस्मादनुमानहेतुव्याप्तिप्रमितव्यतिरेकबोधनाय संशये व्यतिरेकनिश्चये चोद्भाव्यमानेऽपि कृतक्तावेवेत्यत्र विपक्षसम्बन्धमात्रनियततत्सम्बन्धावश्योपन्यास्याविति तत्सम्बन्धमात्रमेवास्तु व्याप्तेस्तत्प्रमितेश्च व्यतिरेकस्य लिङ्गत्वादुद्भाव्यं कृतमितराभ्यामिति लकारभेदप्रयोगे तैस्तैः कारैः कालविपर्यविशेषप्रतिपादनवद्विभक्तिभिर्लिङ्गसंख्याज्ञापनवत् पश्यतोऽस्मिन्मात्रित्यादौ धर्मादिप्रतिपादनवच्च नेदं घटते तत्र तेषाम-

तात्पर्य्यविषयाणामपि पदप्रयोगे विशिष्ट-बोधने वा अन्यथासिद्धानां यथाबोधनं तथा यत्रत्रापि व्याप्तेर्व्विशेषणानामतात्पर्य्यविषयत्वं तदनैकान्तिकसाधारण्यादेव अन्यथोक्तदोषा-परिहारादेवेति। अनैकान्तिकत्वाद्यनुद्भावयता अनधिगच्छता वा विरुद्धसमाख्योद्भावन-मप्रत्याधिगमश्चेति तदुपयोगित्वान्न पृथक्-दूषणं विशेष्य प्रतिपादनं विशेष्यावगमञ्च विना विशिष्टप्रतिपादनस्य विशिष्टावगमस्य वा अशक्यत्वात् एवमन्यत्रापि विशेषणस्याप्रयो-जकता विशेष्यस्य सामर्थ्यं स्वयमूहनीया। तद्यथा इदमसाधकं साधारणानैकान्तिकत्वादि-त्यत्र साधारणेति विशेषणे सपक्षविपक्षगतत्वा-दित्यत्र सपक्षगतत्वेऽप्युद्भावयमाने एवमसाधा-रणेऽपीति इदमसाधकं जातित्वादिति जातित्व-निवेशने स्वव्याघातकमुत्तरं जातिरिति स्वव्या-घातकत्वस्यैव सर्व्वमसत् ज्ञेयत्वादित्याद्यजाति-जातिसाधारणस्य दूषणसमर्थत्वेनोत्तरत्वाभि-धान इति। किञ्च साध्यविपरीतेति साध्या-भावेत्यर्थे यदा अभावात्मैव साध्यः क्वचिद्भवति

तत्र तद्विपरीतस्य भावत्वात्तदव्यापकत्वं लक्षणस्य। नच विपरीतशब्दस्य विरोधिभावार्थत्वे भावाभावोभयव्याप्तिरिति वाच्यं सहानवस्थानं हि भावाभावयोर्व्विरोधोऽभ्युपेयते अनवस्थानञ्च संसर्गनिषेधः सच भावाभावयोरन्योन्यस्यावस्थानमेव। परस्परप्रतिषेधरूपत्वात्तयोः तथा च सति भावाभावयोः स्वरूपस्यानुपसंग्रहे प्रत्येकमव्याप्तिर्मिलितस्यासम्भव एवेति। वक्ष्यामश्च भावाभावयोर्व्विरोधनिरुक्तिनिराकरणमुपरिष्टादिति।

किञ्च व्याप्तपदेन लक्षणप्रविष्टेन किं व्यवच्छेद्यम् अनैकान्तिकमिति चेत् किं तदनैकान्तिकं तथा हि। अनैकान्तिकः सव्यभिचार इत्यलक्षणम् सव्यभिचारत्वं हि यदि विपक्षवर्त्तिता तदानीं विरुद्धेऽपि प्रसङ्गः असाधारणानैकान्तिकाव्याप्तिश्च। अथ सपक्षविपक्षगताभावता तदा साधारणोदाहरणाव्यापकत्वम्। अथोच्यते सव्यभिचारत्वं सपक्षविपक्षसाधारणता अभिप्रेता सा चान्वयेन साधारणस्य व्यतिरेकेणासाधारस्यानैकान्ति-

कस्य संग्राहिका सपक्षविपक्षसाधारणतामात्रं त्वन्वयेन व्यतिरेकेण वेति विशेषवत्तया न विवक्षिता अतः साधारणासाधारणानैकान्तिकयोरुभयोरपि संग्रहः। विवादाध्यासितं क्षणिकं सत्त्वादित्यादेरनुपसंहार्य्यस्यापि सपक्षविपक्षशून्यत्वादेव सपक्षविपक्षगतत्वाभावेन साम्यमिति। विचार्य्यमेतद्व्याख्यानं परमस्तु तावदापाततः तथापि व्यतिरेकेण सपक्षसाधारणतायाः सपक्षव्यापके सद्धेतौ धूमविशेषादौ गतत्वेनातिव्यापकत्वं यदि तस्य दोषस्य परिहारार्थं सर्व्वविपक्षसपक्षसाधारणमनैकान्तिकमिति ब्रूषे। तदा व्यतिरेकमात्रेण सर्व्वसपक्षविपक्षसाधारणता धूमानुमानादिगामिनी न भवतु नाम। अन्वयेन तु सर्व्वसपक्षविपक्षसाधारणता विपक्षसपक्षैकदेशगामिनं साधारणमनैकान्तिकं शब्दो न नित्यः प्रत्यक्षग्राह्यत्वादित्यादिकं न संगृह्णातीत्यव्याप्तिरित्येकं सन्धित्सतोऽपरं प्रच्यवते। अपि चान्वयव्यतिरेकाभ्यां सर्व्वसपक्षविपक्षगतत्वाद्धूमानुमानादौ स एव प्रसङ्गः विशेषरूपेण तयोरविवक्षित-

त्वात्। किञ्च सर्व्वसपक्षविपक्षसाधारणमनै-
कान्तिकमिति वाक्ये यदि सर्व्वेति विपक्षव्यापि
विशेषणं तदा विपक्षैकदेशवृत्तेः सपक्षव्यापिनः
साधारणानैकान्तिकस्य सङ्ग्रहः कार्य्यत्व-
यवकोमहत्त्वात् घटवदित्यादेरव्यापकं लक्षण-
मिदम्। अथ सर्व्वेति न विपक्षस्य विशेषणं
तदा व्यतिरेकमादाय विपक्षसर्व्वसपक्षसाधा-
रणमनैकान्तिकमिति एतद्विपक्षैकदेशमात्रव-
ृत्तौ विरुद्धे क्षितिर्नित्या सावयवत्वादित्यादौ
गतत्वादतिव्यापकमिति। का चेयं वाचोयुक्तिः
सपक्षविपक्षसाधारणमनैकान्तिकमित्युक्ते सर्वं
संगृह्यते अन्वयेन व्यतिरेकेण वेति कथम-
नुपसंहार्य्यस्यासत्सपक्षविपक्षस्य सपक्षे विपक्षे
वा अन्वयेन व्यतिरेकेण वा साधारण्यं स्यात्
तयोरेवाभावात्। यदि च सपक्षे च विपक्षे
च साधारणत्वमुभयत्र स्वरूपानुगमोऽविव-
क्षित स्तदानीमसाधारणानैकान्तिकाव्याप्तिः।
अथोभयस्मिंस्तस्मिन्नसत्त्वं तद्विवक्षितं तदा सर्वा-
व्याप्तिः तदसत्त्वस्यासाधर्म्यत्वात्। अथ तदु-
भयवर्त्त्यभावप्रतियोगित्वं तदुभयसत्त्वस्य

थोऽभावस्तदाश्रयत्वं वाभिप्रेतं तदापि साधा-
रणोदाहरणाव्याप्तिः । अथ मन्यसे तदुभय-
साधारण्यं नाम एकस्मिंस्तादृप्यं हेतोः सत्त्व-
मसत्त्वं वा तादृप्यमपरस्मिन्नपि यत्तदुच्यते
तथा सति नाव्यापकतादोष इति । नैवम् ।
मुख्यस्तावद्वचनार्थो नोपपद्यते हेतोरैकरूप्यस्य
सपक्षविपक्षावाश्रय इति । किं नामैकरूप्य-
वतो हेतोस्तावाश्रयाविति स्यात्तदा चासाधा-
धारणाव्याप्तिः तत्र सपक्षे विपक्षे च हेतो-
रसत्त्वेन तदाश्रयत्वासम्भवात् । तस्मात् स-
पक्षे विपक्षे च साधारणत्वं हेतोरनैकान्ति-
कत्वमित्यनुपपन्नमेव असत्त्वपक्षे हेतोस्तदा
श्रयकत्वानुपपत्त्या सपक्षे विपक्षे चेति सप्त-
मीनिर्देशस्यासङ्गतत्वात् । तदभावापेक्षया
चाश्रयत्वस्योपपत्तौ हेतोस्तदाश्रयत्वे किमा-
यातम् आयातु वा किञ्चित् तथापि साधार-
णोदाहरणेषु हेत्वभावापेक्षया सपक्षविपक्षयो
र्नाश्रयता सप्तम्यर्थः किन्तु हेत्वपेक्षयैवेति
एकार्थपर्य्यवसायित्वे वाक्यस्य लक्षणाव्यापक-
तापत्तिरेव । किञ्च सपक्षविपक्षसाधारणत्वं

यदि सामान्यतो लक्षणं साधारणासाधारणानैकान्तिकभेदद्वयसंग्रहार्थमुच्यते तदा सपक्षविपक्षयोरन्यत्वादिभिर्हेतोः साधारण्यमस्त्यन्यथापीत्यतिव्याप्तिः। अथातिव्याप्तिपरिजिहीर्षयान्वयव्यतिरेकाभ्यां सपक्षविपक्षसाधारणमनैकान्तिकमित्युच्यते तदा अन्वयव्यतिरेकयोः प्रत्येकमिलितविकल्पानुपपत्त्या अव्यापकत्वापातः। स्यादेतत् स्वस्वभावविरोधाश्रयाश्रितसपक्षविपक्षत्वं सपक्षविपक्षसाधारण्यं विवक्षितमेव नाव्याप्त्यतिव्याप्ती इति तदप्यसत्। तथाह्यत्र तावत्सर्वपदविशेषणोपादानानुपादानपक्षोक्तदोषापातः सर्वशब्दोपादाने धूमानुमानादौ प्रसङ्गश्च। स्वस्वाभावविरोधशब्दार्थस्यापेक्षस्यानुगतस्यासम्भवेन लक्षणानुगमाभावो दोषः तत्तदभावयोर्हि विरोधः सहानवस्थानम् अनवस्थानञ्चावस्थानप्रतिषेधो न च तच्चावस्थाभावस्वरूपादन्यत्। नचाभावस्याप्यनवस्थानं भावस्वरूपादन्यत् किन्तु तदेव भावस्य स्वरूपं तत्र स्वस्वाभावविरोधाश्रय इत्यस्य नार्थैक्यं किञ्चित्सम्भाव्यमानमवाप्यते। स्वस्वाभावविरो-

धाश्रय इति वचनं विचारमर्हति। किञ्च स्वस्वाभावयोर्विरोधविशेषणतया आधेयकोटिनिवेशात् विशेषणघटितमूर्त्तित्वाद्विशिष्टपदार्थस्य तदाधारत्वानुपपत्तेः अतिव्यापकता च स्यात् अन्वयमादाय सपक्षे व्यतिरेकमादाय विपक्षे वर्त्तमानस्याप्युक्तलक्षणोपेतत्वात्। स्वस्वाभावाविशेषितस्य तु विरोधस्याश्रयेऽभिधीयमाने सर्व्वानुमानव्यापकत्वमनैकान्तिकलक्षणस्यापतेत्। न च वाच्यं स्वस्वाभावोपलक्षितोऽविरोधोऽभिमतः तेन विशेषणपक्षोक्तदोषस्य नावकाश इति यतः स्वस्वाभावाभ्यां विरोधमात्रं वा लक्ष्यते तद्व्यक्तिर्वा काचित्। आद्ये यदेव स्वस्वाभावाभ्यां लक्षितं विरोधमात्रं तदेवान्यदपीत्युक्तातिव्याप्तिः तदवस्थैव स्वस्वाभावपदोपादानवैयर्थ्यञ्च। अथ द्वितीयस्तदा लक्षणस्याननुगमः एकस्य विरोधव्यक्तिविशेषस्यानपरिगृहीतस्यापरविरोधव्यक्तेरन्यत्वात्। अथ यावत्योऽपेक्षिता विरोधव्यक्तयस्ता उपलक्ष्यन्त इत्युच्यते किन्नोपलक्ष्यन्ते किन्तु किं केनचिदनुगतेन रूपेण उत प्रतिस्वं व्यावृत्तेनात्मना।

प्रथमे तद्देशोच्यतां किमुपलक्षणोपन्यासेन। न च तत्सम्भवति विरोधमात्रख्यातिप्रयुक्तकत्वात् प्रतिस्वं व्यावृत्तेन व्यक्तीनानात्मनोपलक्ष्यत्वे तथैव तासां लक्षणप्रवेश इति मिलितानां लक्षणत्वे सर्व्वाव्याप्तिः प्रत्येकलक्षणत्वे परस्परोदाहरणाव्याप्तिः। स्यादेतत् सपक्ष एव विपक्ष एव वर्त्तते न यः सोऽनैकान्तिक इति लक्षणमस्तु तेन साधारणासाधारणोदाहरणाव्याप्तिर्भवतीति एतदप्यलक्षणं सद्धेतौ धूमादावपि गतत्वात् तथाहि असौ विपक्ष एव वर्त्तते [illegible] तथाहेतुः नापि सपक्ष एव पक्षेऽपि वर्त्तमानत्वात्। अथ पक्षवृत्तिरिति विशेषयसि तथापि सद्धेतोरपरित्यागः पक्षवृत्तित्वादेव सपक्ष एव वृत्तेरभावात् असिद्धानैकान्तिकसङ्कराव्याप्तिश्च। अथ पक्षव्यतिरिक्त इति विशेषणं प्रक्षिपसि तदानीमप्रसक्तव्यावर्त्तनमनुपपन्नं न हि पक्षाव्यतिरिक्तः सपक्षोऽपि पक्षो वा सम्भवतीति सपक्षस्य विपक्षस्य च कुतश्चिदव्यावर्त्तकं विशेषणमेवेदं तयोः कथं घटते। अथ पक्षव्यतिरिक्ते वर्त्तमान इति विशे-

पयसि तदानीमसाधारणाव्याप्तिः नासौ पक्ष-व्यतिरिक्ते वर्त्तमानः। अथ पक्षव्यतिरेके-णेति विशेषणमुपादत्से तदापि पक्षव्यतिरेक इति पक्षविपक्षरूपस्योपलक्षणत्वं हेतुत्वं वा द्वयमपि पक्षमात्रवृत्तावसाधारणानैकान्तिकेन सम्भवति पक्षविपक्षस्य तत्राभावादेव। निषे-ध्यविशेषणत्वे तस्य सद्धेतौ गमनं स्यात्। ए-तेन पक्षं विना पक्षमन्तरेणेत्याद्यपरैर्विशे-षाभिधानमपास्तम्। अथ यदि पक्षव्यतिरिक्ते वर्त्तते तदा सपक्ष एव विपक्ष एव न वर्त्तते यः सोऽनैकान्तिकः तदा सत्यसाधारणस्यापि व्याप्तिः। सद्धेतौ चातिप्रसक्तिरिति मन्यसे तदा भ्रान्तोऽसितराम् एवं सति नोभयस्यापि सं-ग्रहः। असाधारणे तावद्यदि पक्षव्यतिरिक्ते वर्त्तत इत्येतन्न सम्भवति तस्य पक्षमात्रवृत्तेः कदाचिदपि पक्षव्यतिरिक्तवृत्तिसम्भावनानुप-पत्तेः साधारणेऽपि निश्चितसपक्षविपक्षवृत्तौ यद्यर्थं न पश्यामो यदि पक्षव्यतिरिक्ते वर्त्तत इति न हि निश्चितवृक्षभावायां शिंशपायां प्रयुज्यते यदि शिंशपा वृक्षः स्यादिति तत्कस्य

हेतोः संशयोपस्थापितात् कोटिद्वयादेकस्यां कोटौ तदाश्रये किञ्चिद्धर्मोपदर्शनार्थमारोप्यमाणायां यदीति प्रयुज्यते। ननु निश्चित एव वस्तुनि तस्मादसाधारणानैकान्तिकसंग्रहाय यदीत्याद्युपात्तं यत्तन्न साधारणमपि समग्रहीत्। अथ विपक्ष एव सपक्ष एव वर्त्तते न यो हेत्वाभासः सोऽनैकान्तिक इति लक्षणं मन्यसे तदप्यनुपपन्नम् अनैकान्तिकत्वमनिश्चित्याग्रत एव हेत्वाभासत्वावधारणे तत एव हेतोरसाधकत्वं सिद्धमिति ज्ञातं तदुपजीविनानैकान्तिकव्युत्पादनेन। अथाग्रे हेत्वाभासत्वं नावधार्य्यते तदा लक्षणस्य दुरवधारणत्वं विशेषणस्य हेत्वाभासत्वस्यानवधारणात् अथ ब्रूषे असिद्धविरुद्धप्रकरणसमकालात्ययापदिष्टादन्यो हेत्वाभासोऽनैकान्तिक इति तदाप्युक्तन्यायेनैव निरस्तम्। किञ्चैवमसिद्धादिसङ्कीर्णस्यानैकान्तिकस्य न संग्रहः स्यात्। न च तदसिद्धादित्वादेवाहेतुर्भविष्यतीति वाच्यम् इतरानैकान्तिकवद्विपक्षगतत्वादिनाप्युद्भावने दोषत्वसम्भवात्। अथ मन्यसे साधा-

रणत्वासाधारणत्वयोर्व्यतिरेकाभ्यां मिलिताभ्यां विशिष्टादन्यत्वं साधारणासाधारणानैकान्तिकव्यापि सामान्यलक्षणमस्तु। मैवम्। यदि व्यतिरेकद्वयविशिष्टादन्यत्वं तर्हि तस्य विशिष्टस्य विशेष्ये विशेषणे च द्वूदमस्तीत्यतिव्याप्तेः। यदि व्यतिरेकद्वयवत्तोपलक्षणं तदोपलक्ष्यस्वरूपाणां यदि भेदेनैवोपलक्ष्यता तदा व्यतिरेकाविशिष्टे तस्मिन्नस्ति। न हि यदेवाविशिष्टं तन्मात्रं विशिष्टम् एवमभेदेनापि भेदाभेदाभ्यामेवापि तदिति चेन्न अतद्रूपीति प्रसक्तताद्वस्थ्यात्ततोऽन्यत्वान्यत्वं लक्षणमिति चेन्न अप्रसिद्धादिसङ्कीर्णानैकान्तिकोदाहरणाव्यापनात्। स्वरूपाणामानन्त्ये तत्प्रतियोगिकान्यत्वावधारणस्याशक्यता तेषामानन्त्यात् तन्मध्यपतितकतिपयान्यत्वे चान्यत्र कतिपये प्रसक्ताद्वस्थ्यात् उपलक्षणत्वे चोभयव्यतिरेकवत्त्वान्यत्वप्रतियोगिकोटिप्रवेशेन तत्संगृहीतव्यतिरेकपक्षतापातात्। एवञ्चाहष्टवाणादिना नीलादेश्चपूताहाणादिविपाणित्वानुमानौचित्यापातात् हेत्वाभासान्तरमप्येवं किन्न समया-

हीति व्याख्यायां चेद्व्याख्यातौ। एवञ्च वाच्यं तस्यैव लक्षणस्य निर्वचनतापत्तेरिति। असिद्धत्वादिप्रकारादन्येन प्रकारेण हेत्वाभासोऽनैकान्तिक इति चेत् वाच्य स्तर्हि स प्रकारः कस्यान्यता ततः ततोऽन्यत्वं ज्ञेयम्। किञ्चैवं तर्हि असिद्धादन्यदनैकान्तिकमिति कृत्वा विरुद्धादीनामनैकान्तिकत्वेनैव संग्रहे प्राप्ते विरुद्धादिवद्रूपान्तरासंग्राह्ययोरेव यदनेन प्रकारेण संग्रहमकार्षीस्तत् नियतं कश्चिदेव भवतोऽनियन्ता। यदा च त्वमसिद्धादिव्यतिरिक्ततयानैकान्तिकं लक्षयसि तदा असिद्धादिभेदकं प्रकारमनवगम्य तदन्यत्वमशक्याधिगममिति तदभिधाने प्रसक्तो तदाश्रया ये दोषा दर्शितास्तैः स्फूर्तिव्यतिरिक्तत्वदोषैश्च निराकर्त्तव्योऽसि। साध्येनाव्याप्यत्वे सति तदभावाव्याप्तोऽनैकान्तिक इत्यपि न साध्याविशिष्टेऽपि गतत्वात् विशेषणीभूतसाध्याव्याप्यत्वानगमाच्च प्राथमिकाव्याप्यत्वासिद्धिरेवोपजीव्यादूषणं स्यात् विशेषणांशस्य चासाधकत्वसाधनसामर्थ्याद्व्यर्थविशेष्यतापि वस्तुगतिव्यापक-

तस्मादपर्य्यवसायिनि तदभावमात्रपर्य्यवसा-
यिनि वा तत्कालसन्दिह्यमानान्यतरव्यापकत्वे
शब्दोऽनित्यः श्रोत्रविशेषगुणत्वादित्यादावसा-
धारणे ऽव्याप्तत्वाच्च। वस्तुतः साध्याव्याप्ते
तत्कालेऽपि सत्प्रतिपक्षतया अनिर्द्धारितसाध्य-
व्याप्तिके प्रकरणसमे गतत्वाच्च। एतेनानै-
कान्तिकः सव्यभिचार इति प्रत्युक्तं वेदितव्यं
सव्यभिचारस्योक्तप्रकाराधिकस्य निर्व्वक्तुम-
शक्यत्वादिति। अपि चोक्तलक्षणविशेषणेन
प्रमाणव्यवच्छेदकत्वेन किं व्यवच्छेद्यं केनचित्
सत्प्रतिपक्षः केनचिदन्य इति चेत्।

कः पुनः सत्प्रतिपक्षः। तथा हि सत्प्रति-
पक्षलक्षणमनुरुन्धानो यस्त्वाह समानबले बोधित-
साध्यविपर्य्ययको हेतुत्वेनाभिमतः सत्प्रति-
पक्ष इति तन्न तथा हि किमिह बलं विवक्षितं
सामर्थ्यमिति चेत् तत् कुत्र कार्य्येऽभिमतं न
तावत्सर्व्वस्मिन्नेव कार्य्ये सत्प्रतिपक्षहेत्वोभिन्न-
विषयबुद्ध्यादिजनकतया सर्व्वकार्य्येषु समश-
क्तिकतायाः असम्भवात्। नापि यत्र क्वचित्
कार्य्ये प्रकृतसाध्यं प्रति प्रतीयमानासिद्धत्वादि-

दोषेणापि प्रमेयत्वप्रतिपादनादौ समर्थेन प्रति- हेतुना सत्प्रतिपक्षताप्रसक्त्या सर्व्वहेतूनां प्रक्ष- प्रकरणसमहेत्वाभासत्वापत्तेः। नापि पूर्व्व- हेतुसाध्याभावयोग्यरूपे कार्य्ये उत्तरहेतो- रेवमसत्प्रतिपक्षत्वे स्वसाध्यसाधकतापत्तेः प्रतिहेतोरिति चेन्न तव तत्प्रतिहेतोरसा- मर्थ्यादेव सत्पक्षिकत्वानुपपत्तेः इत्यमेव न हेतुसाध्यविपर्य्ययबाधनेऽपि। अथोच्यते स्वकीये स्वकीये प्रकृतसाध्ये यत्र पक्षसपक्षसत्त्वविपक्षव्या- वृत्तत्वाबाधितत्वलक्षणं सत्प्रतिपक्षहेत्वोस्तुल्यं तदभिप्रायेणेदं समबलाभिधानं तेनेदमुक्तं भ- वति पक्षसपक्षसत्वविपक्षव्यावृत्तत्वाबाधितविष- यत्वैस्तुल्येन बोधितसाध्यव्यतिरेकः सत्प्रति- पक्ष इति नैतदपि युक्तम्। प्रतीयमानभागा- सिद्धत्वेनापि प्रतिहेतुना सत्प्रतिपक्षत्वप्रसङ्गात् कियत्यपि पक्षे सत्त्वेन तस्य पक्षसत्त्वभावात्। नचैष्टव्यमेव भागासिद्धेनापि सत्प्रतिपक्षत्वं प्रतीयमानदोषान्तरेणापि तथा सति सत्प्रति- पक्षत्वस्येष्टव्यत्वापत्तेः हेत्वाभासान्तरत्वाविशे- षात्। न च सर्वपक्ष इति कृते नायं दोष इति

वाच्यं यत्रैकएव पक्षः प्रतिहेतौ तत्र सत्-प्रतिपक्षस्याव्यापनात्। तत्र पक्षस्य सर्व्व-धर्म्मार्थत्वाभावादेव सर्व्वपक्षसत्त्वाभावेनोक्त-लक्षणानुपपत्तेः एतेन यावदित्यपि पक्षविशे-षणे दोषउक्तप्रायः। किञ्चान्वयव्यतिरेकिणः केवलव्यतिरेकिणा केवलव्यतिरेकिणस्वान्वय-व्यतिरेकिणा सत्प्रतिपक्षे लक्षणमिदं नास्ति सपक्षसत्तया तुल्यतायास्तत्राभावात्। न च सपक्षसत्तया तुल्यत्वेनेति लक्षणे तदनुरोधान्न कर्त्तव्यमेव तथा सत्य साधारणानैकान्तिकतया निश्चितेनापि सत्प्रतिपक्षत्वप्रसङ्गात्। नचा-न्वयव्यतिरेकिणैवान्वयव्यतिरेकिणः केवल-व्यतिरेकिणैव केवलव्यतिरेकिणः सत्प्रतिपक्षता नव्यत्यासेनापीति नियमोऽभ्युपगन्तुं शक्यः उ-भयोरप्यनवगम्यमानदोषान्तरवत्त्वदशायामे-कसम्बन्धिनो दोषस्यावश्यम्भावितया एकतर-व्याप्यत्वपक्षधर्म्मत्वावगमोमे भ्रान्तिरिति बुद्धि-मादाय प्रतिपत्तुर्निश्चयोत्पत्तिप्रतिबन्धमाधातुं केवलव्यतिरेकिणान्वयव्यतिरेकिणोऽन्वयव्यति-रेकिणा च केवलव्यतिरेकिणः प्रतिहेतौ

सामर्थ्यस्य दुरपवादत्वात् एतदेव तु सत्प्रतिपक्षत्वस्य दोषत्वाभ्युपगमे मूलं यन्नाम व्याप्तिपक्षधर्म्मताप्रमितिरस्मिन् सति न भवितुमर्हतीति। यथाभिधत्ते पक्षसपक्षसत्त्वविपक्षव्यावृत्त्यबाधितविषयत्वयोगिना बोधितसाध्यविपर्य्ययः सत्प्रतिपक्ष इति न निरस्तप्रायत्वात्। पक्षपदे सर्व्वशब्दविशेषणप्रक्षेपाप्रक्षेपपक्षोक्तदोषस्य केवलव्यतिरेक्यव्यापकत्वस्यापि भावात्। किञ्च सोपाधिमसिद्धभेदं वदतां मते सोपाधितया निश्चीयमानेऽपि सर्व्वं यथोक्तमिदं लक्षणमस्तीति तेनापि सत्प्रतिपक्षता स्यात्। अथ ब्रूषे असिद्धविरुद्धानैकान्तिकबाधितविषयत्वहीनेन बोधितसाध्याभावः प्रकरणसम इति नैतदपि सुस्थम् आपाततोऽस्फुरद्दोषेण वस्तुगत्या वासिद्धादिदोषवता सत्प्रतिपक्षतास्वीकारात् तदव्यापकत्वात्। किञ्च विरुद्धार्थगोचरयोः सत्प्रतिपक्षहेत्वोर्मध्येऽवश्यमन्यतरासिद्धादिदोषेण भवितव्यम् अन्यथा धर्म्मिणो विरुद्धधर्म्मासाध्यासम्बन्धात्। तदेवम् अवच्छेदादोषानिश्चयात्प्रतिहेतावप्य-

सिद्धादिदोषाशङ्कायामापतितायामसिद्धादि हीनेनेति लक्षणांशस्यानिश्चयात् लक्षणस्य दुरवधारत्वम् । न च वाच्यं किमर्थं सत्प्रतिपक्षहेत्वोरन्यतरासिद्धादिकमपश्यमभ्युपेयं सत्प्रतिपक्षलक्षणदोषदुष्टत्वादेव तयो र्न पक्षधर्मो विपक्षधर्मोऽध्यस्तत्वमापत्स्यत इति यतोऽवश्यं दुष्टे हेतौ व्याप्तेः पक्षधर्मतया वाभावेन भवितव्यं तत्सत्ताभ्युपगमे साध्यसत्ताया अभ्युपगमप्रसङ्गात् । बाधादीनामप्युपाधिस्थापनद्वारा व्याप्त्यादिभङ्ग एव पर्य्यवसानात् । सत्प्रतिपक्षत्वादुन्नीयमानोऽपि व्याप्तिपक्षधर्मताभङ्गो न द्विशाप्येकस्मिन् हेतौ निर्णेतुं शक्यः अन्यतरस्य व्याप्त्यादिभङ्गेनापि सत्प्रतिपक्षत्वस्योपपत्तेः अतोऽविशेषनिष्ठतया तदुन्नयने स्थिते यदि साक्षादवधार्य्यते तदानीमसिद्धिः । अथ लिङ्गतोऽनुमीयते तदानैकान्तिकादेरन्यतमदूषणं प्रसङ्गस्यास्ति सत्प्रतिपक्षे तत्रायमसिद्धाद्यन्यतमत्वाभ्युपेयं तत्र तथाभवत् दोषस्य कुत्र द्वयोरध्यस्तत्वमस्त्विति चानिष्टरेखे प्रतिहेतावपि तच्छङ्कायां सत्यामसिद्धादि-

हीनेनेति लक्षणांशस्य दुरवधारणत्वं दुष्परि-हरमेव स्यादेतत्। अस्तु लक्षणांशस्यासि-द्ध्यादिहीनत्वस्यानिश्चयः संशयोऽपि तावदस्ति तत् संशयेन शङ्कितसत् प्रतिपक्षतादोषग्रस्त-त्वादेवासाधकत्वं दूष्यानुमानस्य शङ्कितोपा-धिविवासिद्धिशङ्कया। न च यामसिद्ध्यादि-शङ्कामुपजीव्य सत्प्रतिपक्षादिशङ्कादोषः स्यात् सैव तदा दोष इति वाच्यम् असिद्ध्यादिश-ङ्कासा एव तादृशप्रतिहेतुदर्शनमूलकतया तदुपजीवकत्वादिति। नैवम्। यतः शङ्कितो-पाधिनाऽसिद्धेनाप्येवं सत्प्रतिपक्षता प्रसज्येत। ननु भवत्वेवमपि तेन किन्नाम भवेत् तस्या-सिद्धतया हीनबलस्य सिद्ध्यादिमता पक्षबाधं विभूय न किञ्चिदन्यत्। बाधादेव तर्हि न तेन सत्प्रतिपक्षतेति चेन्न सन्दिग्धासिद्धतया सत्प्रतिपक्षहेतोरपि तर्हि कथं परहेत्वसाध-कत्वमसाधकत्वं भविष्यति हेत्वाभासत्वावि-शेषात् हेत्वाभासान्तरं न दोषसंशयमापादय-त्यतो नैवमिति चेन्न तर्हि। यमुपाधिमादाय न्यूनबलतया बाध्यता तमादायैव तथापि न

उपाधेर्दोषसंग्रहत्वमत्वादेव। किञ्च क्वचित् सत्प्रतिपक्षत्वनिश्चयाभावे संशयानुपपत्तिः। अथान्यथाकारं लक्षणमभिधत्से असिद्धविरोध-व्यभिचारकालात्ययापदेशविरहितया प्रतीय-मानेन बोधितोयदीयसाध्यस्य विपर्य्ययः स प्रकरणसम इति एतदपि विचारासहं केन तथा प्रतीयमानत्वमभिमतं किं प्रत्यनुमानप्र-योक्त्रा अथ प्रथमानुमानवादिना द्वाभ्यामपि वा येन केनचिद्वा। न तावदाद्यः स्वयं दोषं जानतोऽपि दूषणान्तरापरिस्फूर्त्तौ यद्ययं दोषं न प्रतिसन्धास्यति तदाभीष्टमेव अथ प्रति-सन्धास्यति तदानीमन्यथापि ममास्फुरद्दोषा-न्तरस्य पराजये अनेन कक्षान्तरारूढायां कथायां शाखान्तरं वा भङ्क्तुमवकाशमा-सादयिष्यामीत्यभिप्रायवतोऽल्पप्रज्ञस्य मयि वदत्यसत्पक्षोऽपि निर्वहतीति लोके प्रकर्षदर्श-नार्थं कथमपि ग्रन्थकाराभिहतस्य वा तथा-विधप्रतिहेतौ निर्व्वाहार्यमन्यानुयुक्तस्य प्रौढ-प्रज्ञस्य स्फुरद्दोषेणापि प्रतिहेतुना सत्प्रति-पक्षोद्भावनदर्शनात्। तत्र परेण दोषानुद्भावेन

पक्षस्यापि भावात्। किञ्च प्रतीयमानता यदि निश्चीयमानता विवक्षिता तदानीमसम्भव एव यतो विरुद्धार्थयोरैकस्यायं दोषः स च क्वास्त्विति तदा निर्द्धारयितुमशक्यतया प्रतिहेतावपि तत्संशयात्। अथ सम्भावना प्रतीयमानता तत्रोद्भावनसम्भावनां दूषयन्तो यद्वक्ष्यामस्तदेव दूषणमतिदेष्टव्यम्। नापि द्वितीयतृतीयचतुर्थाः परबुद्धेर्दुरवधारणतया परस्यासिद्ध्यादिविरहिता बुद्धिरेव भविष्यतीत्यप्यवधारयितुं प्रमाणाभावेनाशक्यत्वात् कथं सत्प्रतिपक्षतां प्रतिज्ञाय व्युत्पादयेत्। शङ्कान्तरञ्चात्र निरसिष्यामः एतेनासिद्धिविरोधकालात्ययापदिष्टव्यभिचारवत्तया व्याप्तिपक्षधर्मताविरहवत्तया च गृह्यमाणेन योऽभिमतसाध्यविपर्ययः सत्प्रतिपक्ष इति निरस्तम्। केनागृह्यमाणत्वमिति निर्वक्तुमशक्यत्वात्। किञ्च सर्वेषामेवैषां लक्षणानां धर्म्यादिशङ्कानुमानबाधितेऽपि गतत्वादतिव्यापकत्वम्। एतेन स्वार्थानुमाने तदाभासे वा सत्प्रतिपक्षस्य दोषत्वमपोढम्। अथोच्यते परगृह्यमाणविपर्येण

सिद्धमिष्टं यदि यत्किञ्चिदपेक्ष्य तदा प्रसिद्धा-सिद्धादिभावं हेत्वाभासमपेक्ष्य विशेषोऽगृह्यते सदनुमानात्मके प्रतिहेताविति तत्राव्यापकत्वम्। अथ प्रकृतविरोधिनं हेतुमपेक्ष्य तदा लक्षणवाक्यमीदृशं पर्य्यवस्यति। व्याप्तिपक्षधर्म्मताभङ्गाभङ्गरूपः प्रकृतहेतौ यस्य विशेषो न गृह्यते तेन बोधितो यदीयसाध्यव्यतिरेकः स प्रकरणसम इति ईदृशमप्येतद्वाक्यं विचारमर्हति तथा हि व्याप्तिपक्षधर्म्मतेति मिलितस्य भङ्गाभङ्गपदसम्बन्धे विवक्षिते प्रत्येकोदाहरणातिव्याप्तिः तत्र भङ्गाभङ्गरूप इत्यस्य च मिलितस्य विशेषपदसम्बन्धेऽभिप्रेते सर्व्वथा असम्भावितया सर्व्वाव्याप्तिः अपि चैवमस्य वाक्यस्यार्थोवक्तव्यः व्याप्तिभङ्गरूपो व्याप्त्यभङ्गरूपः पक्षधर्म्मताभङ्गरूपः पक्षधर्म्मत्वाभङ्गरूपः प्रकृतहेतुतोऽविशेषो न गृह्यते यस्य तेन बोधितो यदीयसाध्यव्यतिरेकः स प्रकरणसमः तथा सति परमाणु निरवयवो विश्रान्तपरिमाणतरतमादिभावत्वाद्व्योमादिवत्युक्ते परमाणुः सावयवो मूर्त्त-

त्वात् घटवदिति प्रत्यनुमानेन प्रतिबाधकत्वेन परमाणुधर्म्मिग्राहिणोऽप्यणुपरिमाणतरतमादि भावः क्वचिद्विश्रान्तः परिमाणतरतमादिभावत्वात् महत्परिमाणतरतमादिभाववदित्यादेः सदनुमानतयेष्टस्य मच्चत्रमंताबलेन तदीयनिरवयवत्वेऽपि प्रमाणताङ्गतस्य तत् प्रतिपक्षता स्यात् । यस्मास्य सदनुमानतां न मन्यते तं प्रत्येवम्प्रायाणि बहून्युदाहरणानि सन्तीति तेषु प्रसङ्गः न च सोऽपि तथास्त्येव तस्य धर्म्मिसिद्ध्यर्थमुपजीव्यत्वेन बलवत्त्वात् तद्व्यवच्छेदार्थं स प्रकृतः प्रकरणसम इति कर्त्तव्यमिति चेत् तथाप्यनुपपत्तिः अत्र हि यदि यस्य न गृह्यत इति सम्बन्धस्तेन यत्सम्बन्धितया न गृह्यत इत्यर्थो विवक्षित स्तदा अव्यापकत्वं दोषस्तथा हि यत्र द्वयोरपि हेत्वोः परमार्थतः साधारणो व्याप्त्यादिभङ्गः सत्प्रतिपक्षदशायामगृह्यमाणः तत्र नास्त्येव तल्लक्षणं न हि तत्र व्याप्त्यादिभङ्गो विशेषोऽपि तु प्रकृतहेतुना सह साधारण एव । नन्वत्रमत्प्रसतो व्याप्तिभङ्गरूपविशेषस्यापि तावन्मात्र-

ग्रहणमस्ति तदादावेव लक्षणं तथापि भवि-
ष्यति तर्हि यदा वादी स्वहेतुसाधारण्यं व्याप्ति-
भङ्गादिदोषं जानन् प्रतिहेतुमिच्छतया पर-
स्योद्भावयति परस्य परिहर्तुं न शक्नोति
तदाप्येवं सत्प्रतिपक्षता स्वकृतैव स्यात् यत
स्वोक्तरूपविशेषवत्तया तेनासौ न गृहीतः उक्त-
रूपस्य समानतयैव तेन गृहीतत्वात् तथापि
प्रतिहेतुवादिना तावद्विशेषवत्तयैव गृहीत-
स्तस्य तत्साधारणभावास्फुरणात् स्वान्य-
व्याप्तिसाधारण्यस्य चात्र ग्रहणमात्रस्य विव-
क्षितत्वादिति चेन्न प्रतिहेतुवाद्यभिप्रायेणा-
गृह्यमाणता पक्षस्य प्रागेव निरस्तत्वात्।
किञ्च प्रतिहेतुवाद्यपि यदि साधारणतां तस्य
दोषस्य तदैव पश्येत्तदा का गतिः। यद्यसौ
वादिहेतावपि दोषं पश्येत् तदा तमुद्भावये-
त्तथा सति च तत्रैव कथासंक्रमः स्यात् सत्प्रति-
पक्षमुपेक्ष्येति चेन्न यदि पश्यन्नपि प्रतिवादी
तत्र दोषमेवं मन्येत। यदीदानीं सत्प्रतिप-
क्षतां प्रतिज्ञातां विहाय दोषान्तरमुद्भावयामि
तदापि प्रतिज्ञात्यागान्मम [illegible] नोद्भावयामि

तथापि प्रतिज्ञातदोषानिर्व्वाहान्मम पराजयः तदेवं इत्था दोषान्तरव्युत्पादनायास इति पराजयस्य तथामासौ तदा का गतिः। अथ यस्य विशेष इत्युक्तलक्षणवाक्ये पदसम्बन्धस्ताभिमतः तदा उक्त स्तावद्दोषो दोषान्तरश्च स्यात् व्याप्तत्वभङ्गादेर्भिन्नहार्थहेत्वोः साधारण्यासम्भवाद्विशेषपदेनाव्यवच्छेदकेन सह विशेषणविशेष्यभावानुपपत्तेः। अथोच्यते व्याप्तिपक्षधर्म्मताभङ्गाभङ्गरूपप्रकृतहेत्वपेक्षविशेषवत् तयानुद्भाव्यमानेन बोधितो यदि त्वसाध्यविपर्य्ययः स प्रकृतः सत्प्रतिपक्ष इति एतदपि नोपपन्नं यदि परस्त्वदीयोऽयं प्रतिहेतुरित्थं भग्नव्याप्तिक इत्येवाभिधत्ते न तु मद्धेतुतोऽयं विशेष इत्यपि ब्रूते आभासान्तरत्वव्युत्पादनादेव प्रतिहेतोः सत्प्रतिपक्षताभङ्गात्तदापीत्थं सत्प्रतिपक्षता न निवर्त्तेत तथा सति च प्रतीयमानासिद्ध्यादिनापि सत्प्रतिपक्षीकरणमिति साधु व्युत्पादितं सर्व्वानुमानानुकूलं स्यात्। किञ्च कस्मिन् काले तयानुद्भाव्यमानत्वमपेक्षितं यदि यदा प्रतिहेतूद्भावनेन परहेतुं दूषयति

प्रतिवादी तस्मिन् कालेऽनुद्भावनं तदा पश्चादुक्तेऽपि प्रतिहेतुदोषे पूर्व्वकालानुद्भावने प्रतीकारो न कश्चिदिति सर्व्वहेत्वाभासैः सत्प्रतिपक्षीकरणमदुष्टमिति गतमनुमानकथया। अथ प्रतिवादिनाभिहिते यदा पुनर्वादिवचनावसरस्तदानुद्भावनमिष्टं तर्हि तत्कथमग्रे प्रत्यनुमानवादिनावधारणीयमयमत्र विशेषदोषं नोद्भावयिष्यतीति दोषशून्यत्वात् स्वकीयस्य प्रतिहेतोः समर्थं स्तदावधारयितुं शक्नोतीति चेन्न उक्तमत्र प्रतीतदोषेणापि सत्प्रतिपक्षकरणं सम्भवतीति तत्र परेण दोषेऽनुद्भाविते विजयश्च भवतीति। किञ्च विशेषदोषशून्यत्वमपि स्वकीयहेतोः कथमयमवधारयेत् विरुद्धार्थयोस्तावद्धेत्वोरेकस्यावश्यं दोषेण भाव्यं तत्र यथा तेन स्वहेतौ दोषो न दृश्यते तथा परहेतावपि तद्दर्शने तमेवोद्भावयेत्। को हि सचेता निश्चितं दोषमुपेक्ष्य सदोषस्य निर्दोषसाम्येन प्रत्यवतिष्ठते तस्मात् सदोषेऽपि दोषमपश्यन्नयं न स्वेनादर्शनं दोषाभावे प्रमाणयितुमर्हतीति। अथोच्यते व्याप्तिपक्षधर्म्मताभङ्गाभङ्गरूपप्रत-

हेत्वपेक्षविशेषणत्वेनानुद्भाव्यतया सम्भाव्यमानेन बोधितो यदीयसाध्यस्य विपर्य्ययः स प्रकृतः प्रकरणसम इति नैतदपि सुस्थम्। यद्युद्भावनकालात् पूर्व्वकालिकी सम्भावना विवक्षिता तदा तात्कालिकानुद्भावनपक्षोक्त एव दोषोऽतिदेष्टव्यः यथोद्भावनस्य योऽवसरो भविष्यति तात्कालिकतया तदा सत्प्रतिपक्षताव्युत्पादनकाले सा नास्तीति विशेषणाभावाल्लक्षणाभावः। यथोच्यते यावत्सम्भावनानुवर्त्तते तावत्सत्प्रतिपक्षता किं सम्भावनायाः कालनियमगवेषणेन। नैवम्। एवं हि प्रतिहेतौ दोषेनुद्भाविते प्रत्युत निर्दोषतयैव स्वीकृते दोषोद्भावनसम्भावनाया निवृत्तेः सत्प्रतिपक्षता निवर्त्तते। तथाचेत्यङ्कारमेव वादी सत्प्रतिपक्षतां परिहरेदिति साधु स्यात्। प्रतिहेतोः प्रतिक्षेपमकृत्वा स्वीकृत्यैव तं सत्प्रतिपक्षता प्रतिक्षिप्यते। न च स्वीकारादेव प्रतिहेतोः पराजयः स्यात् सत्प्रतिपक्षतापरिहारोपायतया स्वीकारस्य करणात् स्वीकारे सति सम्भावनानिवृत्तस्य तल्लक्षणकस्य सत्प्रतिपक्षस्यापि

निवृत्तेः। तस्मात् स्वीकारोऽप्ययं परस्यानिष्टार्थं सिद्धसाधने परकीयसाध्यस्वीकारवद्गुणाय स्वीकर्त्तुं न दोषायेति। यदि च सत्प्रतिपक्षो वादिनोः समानप्रतिपक्षदर्शनजनितात्स्वहेतोराभासत्वसंशयात् तदा क्वचिदपि नास्ति सत्प्रतिपक्षता स्वहेतुपक्षपातेन परहेतावेव दोषः कश्चिदस्ति मया तु न गृह्यत इति ताभ्यां मन्यमानत्वात्। यदाह निश्चितौ हि वादं कुरुत इति। अथौचित्यादावर्जिता संशयेन सत्प्रतिपक्षता स्यात् तदा सर्व्वत्रैव वादे सर्व्वानुमानानां सत्प्रतिपक्षता दुर्निवारा। तद्यथा शब्दानित्यत्वानुमानेन बुद्धिमद्भिः शतशः शब्दनित्यत्ववादिजयात् शब्दनित्यत्वानुमानेन च प्राज्ञैः शतशः शब्दानित्यत्ववादिजयात् द्वयोः पक्षयोरनुमानेषु कतरद्वस्तुतः सदनुमानमित्यर्हतो दोषसंशयस्य दुर्निवारत्वादिति।

प्रकारभेदाभावाच्च न कालात्ययापदिष्टः पृथक्। तद्यथा बाधितविषयः कालात्ययापदिष्ट इत्यस्य लक्षणम्। तथा हि बाधितविषयत्वं किं

विवक्षितं न तावद्बलवता बोधितो विषयवि-
पर्य्ययो यस्य तत्त्वम् यथा श्रुतस्य सत्प्रतिपक्षेऽपि
गतत्वात्। तत्र प्रत्यनुमानस्य प्रथमानुमान-
विषयविपर्य्ययबोधकस्य पक्षधर्म्मतादिबल-
सम्भवात्। अथ बलवतेत्यधिकबलेनेति विव-
क्षितं तदापि केवलव्यतिरेकिणोऽन्वयव्यति-
रेकिणा सत्प्रतिपक्षे गतत्वादतिव्यापकं तत्रा-
न्वयव्यतिरेकिणः प्रतिहेतोः सपक्षसत्त्वलक्षण-
बलाधिक्यसम्भवात्। किञ्चैवं प्रत्यक्षेणानुमा-
नाभासबाधो न स्यात् प्रत्यक्षस्येन्द्रियार्थसन्नि-
कर्षोत्पन्नाभ्रान्तज्ञानत्वमात्रं बलम् अनुमानस्य
तु पक्षधर्म्मत्वादिभूयिष्ठं बलमिति। अथ मन्यसे
अनन्यथासिद्धत्वं बलं विवक्षित्वेदमुच्यते तेना-
नन्यथासिद्धेन बोधितो यदीयसाध्यस्य व्यति-
रेकस्तत्त्वं बाधितविषयत्वमिति। नैवम्। त-
थापि वस्तुतोऽनन्यथासिद्धेन सत्प्रतिपक्षेऽपि
गतत्वम्। किञ्चान्यथेत्यन्येन प्रकारेणेत्युच्यते
अनन्यथेति चाननयेन प्रकारेण यस्मादन्यत्वं
तेनैवेत्यर्थः सम्पद्यते। तथा च वक्तव्यं तदन्यता-
प्रतियोगीति प्रामाण्यं तदिति चेत् अहो दुर्वै-

दग्धी भवतः प्रामाण्येनेति वक्तव्ये प्रामाण्या-द्योऽन्यः स यो न भवति तेन प्रकारेण यः सिद्धः प्रतीत उत्पन्नो वा तेनेति ब्रूयास्य तथापि प्रामाण्येन बोधितविपर्य्ययविषयो यस्य स कालात्ययापदिष्ट इति न इदं रजतमिति शुक्तिं विषयीकुर्व्वति प्रत्यक्षाभासे नेदं रजत-मिति प्रमाणेन बाध्यमानेऽपि हेत्वाभासवि-शेषलक्षणं गच्छेदतिव्यापकतामापद्येत। एवं वाच्यविषयित्वामिच्छायामपि गच्छेत् प्रमाणेन बोधितो यदीयविषयस्यान्यथाभावः स हेतुः कालात्ययापदिष्ट इति चेन्न यदि मुख्यार्थो-हेतुशब्दः तदा हेत्वाभासत्वव्याघातः अथा-मुख्यार्थ स्तदा कोऽस्यार्थः यत्रैष व्यवस्थाप्यत इति सोऽभिधातव्यः प्रमाणेन बोधितो यदीय-विषयस्य व्यतिरेकः स हेत्वाभासः कालात्य-यापदिष्ट इति चेन्न यद्यग्रे हेत्वाभासत्वानि-श्चयः तदा लक्षणस्य दुरवधारणत्वम्। अथ कालात्ययापदिष्टत्वे अनिरूपित एव हेत्वा-भासत्वनिर्णय स्तदा तत एव कृतकार्यत्वात्तत्‌ पश्चात्प्रतीतिकस्य कालात्ययापदेशबोधव्यास-

नेति। तदिदं त्वन्मते लक्षणमस्तु मा वा भूत् सामुद्रिकप्रामाण्येन पुनर्मह्यदेतल्लक्षणं कालात्ययापदेशस्य येनास्य नाम हेत्वाभासभेदव्यपदेशः समाधितः। अथ ब्रूषे हेत्वाभासत्वं हेतुवदाभासमानत्वं हेतुसदृशतया प्रतीयमानत्वं न तु हेतुदोषवत्त्वमिति। मैवम्। हेतुना तुल्यताह्यहेतुत्वावगमं विना न शक्यप्रतिपत्तिः सादृशस्य भिन्नाधिष्ठानस्य तथैव प्रतीतेः। अन्यथा हेतोरपि हेत्वाभासत्वापातात्। ततश्च हेतुरूपवैकल्यस्यावश्यप्रत्येतव्यत्वे प्रागुक्तदोषानिवृत्तिः प्रमाणेन बोध्यमानो यदीयपक्षव्यतिरेकः स कालात्ययापदिष्ट इति चेन्न आश्रयासिद्धव्यापनात्। आश्रयासिद्धव्यतिरिक्त इति विशेषणीयमिति चेन्न विशेषणाद्यसिद्ध्याश्रयासिद्धेन सह सङ्कीर्णं कालात्ययोपादिष्टोदाहरणमेवं न व्याप्येत। प्रमाणेन बोध्यमानो यदीयसाध्यव्यतिरेकः स कालात्ययापदिष्ट इति चेन्न प्रत्यक्षाभासव्यापनात्। तत्रापि हि साध्यस्य शाप्यरूपस्य व्यतिरेको बोध्यत एव प्रमाणेन प्रमाणेन

बाध्यमानो यदीयसाध्यस्य व्यापकस्य व्यतिरेकः
स कालात्ययापदिष्ट इति चेन्न प्रमाणेन बोध्य-
मानाभावस्य प्रकृतहेतुव्यापकत्वासम्भवात् ।
प्रमाणेन बोध्यमानो यदीयसाध्यस्य प्रतिज्ञा-
तस्याभावः स कालात्ययापदिष्ट इति चेन्न स्वा-
र्थानुमाने कालात्ययापदिष्टस्यैवमव्यापनात्
तत्र शब्दरूपस्य प्रतिज्ञातस्याभावात् शब्दस्य
परार्थत्वात् । प्रमाणेन बोधितो यदीयसाध्यस्य
पक्षनिविष्टस्य व्यतिरेकः स कालात्ययापदिष्ट
इति चेन्न तथाभूतस्य पक्षाभासत्वाभ्युपगमेन
मुख्यपक्षत्वासम्भवात् । पक्षाभासनिविष्टत्वे
रतीति तु क्रियमाणे पूर्वं पक्षाभासत्वप्रतीत्य-
प्रतीतिपक्षयोः पृथक् हेत्वाभासत्वप्रतीत्यप्र-
तीतिपक्षोक्तदोषवद्दोषो द्रष्टव्यः । पक्षत्वाभि-
मतांशभूतस्येति च क्रियमाणे प्रष्टव्यं किं पक्ष-
त्वाभिमतत्वं किमु पक्षतयाभ्युपगम्यमानत्वम्
अथ तत्तया प्रमितत्वम् उत प्रत्यक्षतया प्रती-
तत्वम् । नाद्यः दूषकं प्रति तदसम्भवात् तेन
बाध्यसाध्यस्य पक्षाभासतयैव प्रत्युताङ्गीकारात् ।
अनुमानबाध्यस्यापि नियमाभावः यदनु-

मानापरिस्फूर्तौ रून्दग्रन्थेन प्रज्ञाभिमानस्तता च मयि वदति स्फुटदोषमपि को दूषयितुं शक्त इत्यभिप्रायेण यदृच्छया ज्ञातदोषस्यापि प्रयोगस्य सम्भवात्। तत्रानुमानवादिना पक्षत्वाङ्गीकाराभावेन तथाभूतबाधितानुमानाव्यापकमिदं लक्षणं स्यात्। न च पक्षतयोपन्यस्यमानत्वमङ्गीकारार्थ इति युक्तं तथा सति स्वार्थानुमाने कालात्ययापदेशाव्याप्तिः। न द्वितीयः पक्षत्वेन प्रमिते विपर्यये कालात्ययापदेशानवकाशात्। नापि तृतीयः तदा ह्येवं लक्षणमिदं सम्पद्यते प्रमाणेन बाधितो कदीयसाध्यस्य पक्षप्रतीतिविषयांशस्य व्यतिरेकः स कालात्ययापदिष्ट इति अस्य वाक्यार्थस्य न कदाचिदपि सम्भवं पश्यामः यदा तावत्प्रमाणेन साध्यस्य व्यतिरेकबाधस्तदा पक्षप्रतीतिर्नास्ति विशेषदर्शने भ्रमस्यानवकाशात् ततस्च तदा पक्षप्रतीत्यभावेन तद्विषयत्वाभावात् तद्विषयांशस्येति विशेषणाभावाधीनो विशिष्टस्य लक्षणाभिमतस्याऽभावः यदि च प्रमाणेन साध्यव्यतिरेकबाधकं नास्ति तदाप्यैव लक्षण-

विभागस्याभावाल्लक्षणाभाव इति नित्यमसत्त्वव्यवस्थितेन लक्षणेन लक्ष्यं व्यवस्थापयन् श्लाघनीयप्रज्ञो भवान्। न च वैशेषिकप्रक्रियामाश्रित्य विनश्यदवस्थापि पक्षप्रतीति स्तत्काले सम्भावनीया तदीयसाध्यव्यतिरेकावगमनिवर्त्तनीया हि सा तत्साध्यव्यतिरेकावगमश्च पूर्व्वतरमेव भूत इत्यवश्यमभ्युपगम्यम्। अन्यथा प्रमाणेन बोध्यमानत्वं कथं साध्यव्यतिरेकस्य तदावगम्येत। न च वाच्यं प्रतीतिविषयत्वमिदं विशेषणं न भवतीति किन्तूपलक्षणम् उपलक्षणेन चासतापि व्यवच्छिन्नप्रतीतिरुपजन्यते यथा काकवन्तो देवदत्तगृहा इत्युपलक्षणीभूतया काकवत्तया देवदत्त गृहस्य व्यवहारकाल इति यत स्तत्रोपलक्ष्यगृहे स्वाभाविकोविशेषोऽस्ति व्यवहारकाले तेन काकवत्ताऽभावेऽपि तमादाय व्यवहारनियमप्रवृत्तिः न तु तत्राप्यसत उपलक्षणस्य कारणत्वम् अत्र तु व्यक्तीनामुपलक्ष्यत्वे लक्षणस्याननुगतत्वम् अनुगतञ्च किञ्चिदुपलक्ष्यं न लक्षयामहे अत उक्तमेव वाक्यार्थमादाय प्रवर्त्तमाने लक्षणात्मके

साधने विशेषणासिद्धिर्दुर्निवारा। एतेन पूर्व-पक्षितस्य हेतुरित्यस्य प्रत्यक्षाभासव्यवच्छेदार्थ-मुपात्तस्य स्थाने हेतुत्वाभिमत इत्येताहशस्य करणं दूषितप्रायम्। अथ न पक्षे प्रमाणेन बोधितो यद्दीयसाध्यस्याभावः स प्रत्यक्षाभा-सातिरिक्तः कालात्ययापदिष्ट इति नैतदपि युक्तं सत्प्रतिपक्षोपमानाभाससाधारण्यात्। तदतिरिक्त इत्यपि विशेषणीयमिति चेत् एतदपि विचार्य्यतां किं प्रत्यक्षाभासादिव्यतिरिक्तत्वं प्रत्यक्षाभासादिभ्यो वैधर्म्यं किञ्चित् अथवा स्वरूपभेदः अथवान्योन्याभावः। न तावदाद्यः तद्भेदकस्य धर्म्मस्य निर्व्वक्तुमशक्यत्वात्। नापि द्वितीयः स्वरूपस्य परस्परव्यावृत्तया लक्षणा-नौपयिकत्वात्। नापि तृतीयः व्यतिरिक्तत्व-स्यान्योन्याभावात्मनः प्रत्यक्षाभासादावपि भा-वेन तद्व्यवच्छेदानुपपत्तेः। ननु न व्यतिरि-क्तत्वमात्रमन्योन्याभावस्वरूपं विशेषणमस्मा-भिरुपात्तं किन्नाम प्रत्यक्षाभासादिभ्यो व्यति-रिक्तत्वं न च प्रत्यक्षाभासादयः स्वात्मन एव भिन्नाः स्वात्मकमुक्तमसङ्ख्यावत्वात्। अन्यत-

मिदं त्वद्विवक्षितं किन्तु तदेव विचार्य्यते किं प्रत्यक्षाभासादिभि र्विशेषितोऽसावन्योन्याभाव स्त्वयोच्यते उत नैवमप्रलक्षितः यं प्रत्यक्षाभासा-दिष्वप्रसक्तं मन्यसे। आद्यस्तावन्न भवति न हि प्रतियोगिरूपविशेषणसहितोऽभावः क्वचि-दप्यस्ति ततस्तादृशस्य विवक्षितत्वे सर्व्वाव्याप्तिः। द्वितीये तु प्रत्यक्षाभासादिभिरुपलक्षणैर्यदुप-लक्ष्यमन्योन्याभावस्य स्वरूपमेकं तत्प्रत्यक्षाभा-सादिषु बाधितानुमानेषु च साधारणमिति कथं नोक्तप्रसङ्गः अन्यदस्तु सदात्मकं विशेषणं प्रतियोगीत्वभावस्यासन्नेव तज्ज्ञानस्य विशेष्ये स्याद्रूकबुद्ध्याधानाविरोधात् विशेषणस्यावतीति चेत्। अयुक्तमेतत् विशिष्टं तावदभावस्य स्व-रूपनिर्व्वाहापात्तं तच्च विशेष्यमात्रशरीरं न भवि-तुमर्हति तथा सति विशेष्यस्वरूपमेवोच्यतां वृथा विशेषणपदोपन्यासः तदनुपन्यासे वा-न्योन्याभाववत्त्वमात्रमुपन्यस्तं भवेत् तच्च प्रत्य-क्षाभासादे र्व्यवच्छेदस्यापि संग्राहकं ततश्च विशेष्यादन्योन्याभावादधिकं किञ्चिदुक्तत्वं तद्विशिष्टमुपन्यस्यताम्। स च यदि प्रतियोगी

तदीयोऽभिधीयते तर्हि तस्याभावात्तदानीं विशिष्टाभावः प्रसक्तः। विशेष्यमात्रं परिशिष्टं तच्च केवलमतिप्रसक्तं तस्माद्विशिष्टव्यवहार-प्रवर्त्तनकाले विशेष्यातिरिक्तं किञ्चिदनभ्यु-पेत्य विशिष्टसत्ता व्यवहर्त्तुमशक्या। अतः प्रतियोगी नाभावस्य विशेषणं भवितुमर्हति उपलक्षणन्तु स्यात् तच्च चोक्तमेव। नचान्यो-न्याभावएकोन भवति भिन्नप्रतियोगिकौ द्वाव-भावौ तौ तथा च प्रतियोगित्वच्छिन्नं तत्स्वरू-पम् अन्यदेवेति सिद्धान्ताविरोधि न युक्तम् उभयं ह्यन्योन्याभावस्यैकात्मतया प्रतियोगि एकात्मतायाश्च भेदविरोध एव। ततश्च येन रूपेण प्रतियोगित्वं तेन रूपेण भेदानवका-शात् भिन्नप्रतियोगिकता कुतोऽन्योन्याभावस्य। येन च रूपेण भिन्नता तेनान्योन्याभावं प्रति प्रतियोगिता नास्ति वस्तुनोः। ननु वस्तुतस्तयो-रेकत्वाभावात्कथमेकतया प्रतियोगित्वमन्यो-न्याभावं प्रति घटेत वस्तुनोः। यथा वस्तुनो-भूतलसंसर्गाभावेऽपि घटस्य भूतलसंसृष्टतया संसर्गाभावं प्रति तत्र यथान्यद्भूतलसंसृष्टतया

दृष्टं तथात्रापि तावेव सप्रकारभेदौ तदा-
त्मानौ दृष्टौ सोऽयं त्वद्दर्शनाभिप्रायेणास्माकं
निर्वाहार्थं इत्यास्तां विस्तरः। अपि च घटपटयोः
स्वरूपभेदेन वैधर्म्यभेदेन चोभयकोटीकृतयो-
रन्योन्याभावनिरूपणं भवति। यत्र तु प्रत्यक्षा-
भासादेः प्रत्यक्षाभासत्वादिना एककोटि-
तास्तु नाम यस्तु प्रत्यक्षाभासत्वादिभ्यो व्यति-
रिक्ततया प्रतिपत्तव्यं तस्य केन रूपेणैककोटी-
करणं न तावत्प्रव्यक्तिभिन्नेन स्वरूपेण तेषा-
मनन्ततया बुद्धिस्थीकर्तुमशक्यत्वात्। नापि
यद्रूपोपात्तं विशेष्यं प्रत्यक्षाभासादिव्यति-
रिक्तत्वेन विशेषणेन विशेषणीयं तद्रूपक्रोडी-
कृततयैवान्योन्याभावनिरूपणमिति युक्तं तस्य
स्वरूपस्य प्रत्यक्षाभासादिसंग्राहकतया कोटि-
द्वैतभङ्गापादकत्वेनान्योन्याभावनिरूपणे विरो-
धित्वात्। तस्मात् स्वरूपभेदं वैधर्म्यभेदं वा
कोटिद्वयं व्यवस्थापकमप्रतिसन्धाय अन्योन्या-
भावव्यवस्थापनमशक्यमिति स्थिते स्वरूपभेद-
प्रत्यक्षस्येव दूषितत्वाद्धर्मभेदः कश्चिद्वक्तव्यो न
चासौ वक्तुं शक्यः शक्यते वा तमादायैव लक्षण-

व्यवस्थितिरस्तु कृतमन्योन्यव्यतिरिक्तत्वकु-युक्त्या। तदनेन न्यायेनान्यत्राप्यतिप्रसक्त्युदा-हरणान्यत्वेन व्यावर्त्तनं लक्षणवादिनोभग्नस्य शरणमस्त्रं निरसनीयम्। अतएव भेकान्तरं विना तद्व्यतिरिक्तत्वमेव दुर्निरूपमित्यभिप्रा-येण तत्तदन्यत्वे सतीति विशेष्यमाणं वैशेषिक-हेतुं नैतदेवं येन येन व्यभिचारस्तदन्यत्वे सति प्रमेयत्वादिति सत्प्रतिपक्षहेतूपन्यासा-दुपहसन्ति सन्त इति।

इति खण्डनखण्डखाद्ये प्रमाणतदाभासखण्डनं प्रथमः परिच्छेदः।



## द्वितीयः परिच्छेदः।



ननु यदि दुर्लक्ष्या हेत्वाभासास्तर्हि नि-ग्रहस्थानानि प्रतिज्ञाहान्यादीनि बाधकानि भविष्यन्ति। नैवम्। का पुनः प्रतिज्ञाहानिः। स्वाङ्गीकृतपरित्यागः प्रतिज्ञाहानिरित्युच्य-

ग्रम्। तथा हि झटिति सम्वरणे अनिग्रह-
स्थानेऽपि गतत्वेन परदूषितेत्यपि विशेषणीय-
त्वात्। किञ्च स्वीकृतत्वेनाभीष्टमात्रं वाभि-
धीयते अस्तित्वेनेष्टं वा। आद्ये केनचिद्दो-
षेणेष्टस्य रूपान्तरेण त्यागः क्व नाम नास्तीत्यति-
व्याप्तिः। स्वीकारपूर्व्वकोऽस्वीकारे त्यागः न
रूपान्तरेण तत्र तत्स्वीकारः तत्त्यागे
एवासौ न भवतीति नातिप्रसङ्ग इति चेन्न
स्वीकारस्यापि परित्यागपदार्थान्तर्गतत्वे स्वीकृ-
तेति व्यर्थं तत्त्यागेऽपि च नाद्य। द्वितीये अस्ति-
त्वेनेष्टस्य रूपान्तरेण सर्व्वैवानिष्टत्वसम्भवात्।
संयोगाद्यव्याप्यवृत्तिता वादिपक्षे येनात्मैव
संयोगस्यास्तित्वनास्तित्वाभ्यामभ्युपगम्यमानत्वात्
एवञ्च कालदेशादिविशेषेण तत्स्वीकारत्यागाभ्युप-
गमेऽपि प्रसङ्गो द्रष्टव्यः। तस्यैव तदैव तत्रैव
तेनैव तथैवेष्टत्वाविष्टत्वे निवर्जिते त्यक्तेति चेत्
एवं तर्हि कालस्याभ्युपगत्यागाभ्युपगमवत्त्व प्रतिज्ञा-
हानिर्न स्यात् तत्र तदेत्यस्य विशेषणस्याभावात्।
न हि कालः कालान्तरसात्मानमेव बाध्यास्ते
काले. तदेति विशेषणप्रतिक्षेपे अन्यत्र प्रक्षेपे

लक्षणैकतापत्तिः। कालं प्रति च प्रतिज्ञाहाने-
रदोषत्वे तद्वदन्यस्याप्यदोषत्वापातः यदैव स्वी-
कार स्तदैवास्वीकारासिद्धेश्च। तदेति तत्-
कथाकालो विवक्षित इति चेन्न तच्छब्दस्य
व्याप्तिपरत्वे लक्षणानुगमः वादादित्वेन साम्ये
कदाचित्तद्विपरीतवादाद्यास्वीकरणप्रसङ्गः। एवं
तथैव तस्यैवेत्यादिपदस्य द्रष्टव्यम्। उक्तेति
पदस्य चाप्रसिद्धान्तव्यवच्छेदकस्य विरुद्धन्याये-
नाऽसमर्थविशेषणत्वम्। एवं सर्व्वनिग्रहस्था-
नेषु द्रष्टव्यमिति संक्षेपः। प्रतिज्ञाहान्यादी-
त्यादिपदेन च किं संगृह्यते प्रतिज्ञान्तरा-
दीति चेन्न प्रतिज्ञान्तरमेव न निरूपयितुं श-
क्यते। तद्यथा स्वोक्तस्य परदूषितस्य साध्य-
भागस्य पूर्व्वानुक्तविशेषणवतोऽभिधानं प्रति-
ज्ञान्तरमित्यलक्षणं तथा हि यत्र वादिना
प्रथमं सविशेषणः प्रतिज्ञाभागोऽभिहितः
परेण निर्विशेषणोक्त्यसाद्दूषितः ततो वादी
प्रथमाभिहितं सविशेषणमेवोपन्यास्येदृशं म-
योक्तं न तु निर्विशेषणमतोनिरनुयोज्यानु-
योगोभवत इति सदुत्तरमेव ब्रूते तत्रापि गत-

त्वादतिव्यापकमेतत्। पूर्व्वानुक्तविशेषणवत्त्वं तव नास्ति तत्कथमतिव्याप्तिरिति चेन्न प्रथमोक्तेः प्रागभावस्य पूर्व्वं स्थितत्वात्। विशेष्योक्तिरपि तदा नासीदिति चेत् किमायातं तावता विशेषणानुक्त्यतिप्रसङ्गस्य। विशेष्योक्तिकाले विशेषणानुक्तिर्व्विवक्षितेति चेन्न एककर्त्तृकाया वाचो युगपदसम्भवेन सर्व्वत्र तथाभावस्यैव भावात्। विशेष्योक्तेरनन्तरकालइति चेन्न नीलोत्पलमित्यादौ पूर्व्वनिपातितविशेषणे तदभावात्। विशेष्योक्तेरव्यवहितपूर्व्वकाल इति चेन्न उत्पलं नीलमित्यादौ तदभावात्। अव्यवहित इति चेन्न बहुविशेषणके विशेष्ये तदभावात्। विशेषणाभिधानोचितकाल इति चेन्न नानाविशेषणके विशेष्ये क्रमवृत्तित्वाद्वाचः क्रमेणाभिधीयमाने य एकविशेषणाभिधानकाल सोऽपरेषामपि विशेषणाभिधानानां योग्योभवत्येवेति तदान्येषां क्रमभाविनामभावात्सैवातिव्याप्तिः। सर्व्वस्मिन् योग्यकाल इति चेन्न दूषणानन्तरकालस्य योग्यकालत्वाभ्युपगमेऽव्याप्तिः दूषणपूर्व्वकालस्य तथाभिमतत्वे

च दूषणानन्तरभाविन्याः विशेषणोक्तिव्यक्ते स्तदानीमभावात् पूर्व्ववदतिव्याप्तिः। सर्व्वस्या स्तज्जातीयाया विशेषणस्योक्तेरभावोविवक्षित इति चेत् तद्व्यक्तीनामभावप्रतियोगिभूतानां सर्व्वासां पृथक् पृथक् प्रमाणेन केनापि अस्मादृशा प्रत्येतुमशक्यत्वात् अभावानिरूपणेन लक्षणस्याज्ञानासिद्धि प्रसङ्गात्। सामान्यप्रत्यासत्त्या व्यक्तयः प्रतिभान्तीति निरस्तमनुमानादन्तरे। एतेन पूर्व्वमविशिष्टस्योक्तस्येति विशेषणं प्रक्षेप्तव्यमिति निरस्तम् उत्तरकालवाच्यविशेषणकविशेष्यस्य प्रथममविशिष्टोक्तत्वसम्भवस्य दर्शितत्वात्। किञ्च प्रथममविशिष्टमुक्त्वा भवता यदि विशेषणमिदं प्रक्षिप्यते तदा हेत्वन्तरं भवतोऽपि स्यात्तथापि तदभावे वा ममापि कुतः प्रतिज्ञान्तरम्। अथ प्रथममेवेदं विशेषणमुपादाय ब्रवीषि तथाप्यव्याप्तिः प्रथमं सविशेषणमुक्त्वा विशेषणवैयर्थ्यभ्रमेण झटिति सम्बरणान्निर्व्विशेषणेऽभिहिते परेण दूषिते पुनः सविशेषणमभिदधतो नैवं प्रतिज्ञान्तरं स्यादित्यव्याप्तिः स्वपरसाध्यपूर्वपदानां

विवेचने व्यक्तौ पतनाद्व्याप्तिग्रहप्रकरणादि-
लब्धतया प्रागनुक्तस्य स्वात्मपरदूषितस्य प्रक-
रणलभ्यस्य विशेषणवक्तव्यानुवदतोऽपि सद्वादे
प्रसङ्गः। अनुक्तस्थाने चाप्रतिपादितकरणेऽपि
दोषः परस्मिन्नज्ञातप्रतिपत्तौ प्रतिपादितत्वा-
नुपपत्तेरित्यादि स्वयमूहनीयम्। प्रतिज्ञा-
न्तरादीत्यादिग्रन्थेन विभिन्नम्। प्रतिज्ञावि-
रोधादिति चेन्न यत्र एककर्तृकैकवाक्ययो-
र्मिथोव्याघातः साध्यविपर्ययव्याप्तत्वोद्भावना-
न्यस्योद्भावनं प्रतिज्ञाविरोध इत्येतल्लक्षणम्।
तथा हि असत्त्वे घटोनास्तीत्यादावपि गतत्वे-
नातिव्यापकत्वमिदम्। वचनयोर्हि व्याघातो-
ऽन्योन्यविरुद्धार्थत्वं तच्चेहास्ति घटोऽस्तीत्यस्य
घटसत्त्वबोधकत्वात् न नास्तीत्यस्य च तन्निषे-
धकत्वात्। नन्वयुक्तमिदमुच्यते न हि घटो-
नास्तीत्यत्र घटोऽपि विधीयते घटनिषेधोऽपि
येन मिथोव्याघातः स्यात् किन्तु घटोनिषिध्यते
घटनिषेध एव तु विधीयत इति वाच्यं तत्
कुतोव्याहतिरिति चेत् नैवं घट इत्यस्य ताव-
दंशस्य घटविधिबोधकत्वं नास्तीत्यस्यापि तत्-

प्रसरत्येवेति न कथमपि प्रमाणप्रसृतौ विरोधभाषापरिभाषामात्रत्वापत्तेः यथा परेणोक्तोऽर्थः तथा मिथोव्याघातक इत्यपि क्वचिन्मिथोव्याघातकमर्थमप्रमाय न वक्तुं शक्यम्। प्रसज्यते मिथोव्याघातो न प्रमाप्यत इति चेन्न क्वचिदप्यप्रमितस्य प्रसञ्जयितुमपि भवतोऽशक्यत्वात्। मा प्रमायि अप्रमायैव तद्व्यवहार इति चेन्न क्वचिदप्यप्रमितमाभासमात्रोपस्थितं क्व नाम नोपस्थापयितुं शक्यमित्युक्तैवातिव्याप्तिरावर्त्तते। अनेकत्र प्रमितनियतयोरेकत्र प्रसञ्जनमिति चेन्न प्रसञ्जकस्य तद्द्वयैकत्रस्थितिनियतताप्रमितावविरोधस्यानेवम्भावे वा नापादकत्वस्यापत्तेः। एकैकव्याप्याभ्यां पृथक् पृथक् तद्द्वयापादनमिति चेन्न एकैकस्यव्याघातात्। अर्थाद्द्वयं स्यादिति चेन्न अर्थापत्त्यर्थत्वेनैवाव्याघातात्। अर्थापादानं न साधनमिति चेन्न मिथोविरोधित्वेन तर्काभासत्वापत्तेः। इष्टापादानाच्च मिथोव्याघातात् कथं तथा स्यादिति चेन्न तद्द्वयधर्मैकत्वात् व्याघातापत्तेर्धर्मिणि प्रमाणापेक्षायामव्याघातात्।

एवमादीनां दोषाणां परं प्रत्यभिधाने तत्रापि सर्व्वमिदं सुवचमिति चेन्न तत्राप्यन्यत्र दोषोऽयमापद्यत इति प्रतिबन्दीगृह्णतः किं परपक्षे दोषापादानमात्रं विवक्षितम् उत यस्त्वया तत्र समाधिरभिधेयः स मयापीत्यभिप्रायात् स्वपक्षे समाधिः । न तावदाद्यः अप्रस्तुतत्वात् परोक्तदोषानुद्धारे तावतैव कथायास्तदंशस्य वा पर्य्यवसानात् निग्रहापरिहारावधित्वात्तयोः द्वितीये तु स एवाभिधीयतां का नो हानिः भवता तावदभिधीयतां कस्तत्र समाधिः ततो मयाप्यभिधेय इति चेन्न मया तदभिधानस्य साम्प्रतमप्रस्तुतत्वात् नहि मया स्वपक्षसाधनं त्वया च तद्दूषणं प्रकृते वक्तुमारब्धमस्ति किन्तु त्वया स्वपक्षो निर्व्वाह्यः तद्दूषणञ्च मयाभिधानीयमिति कथा प्रस्तुता वर्त्तते । ईदृशि च कथा विभागे मत्पक्षसमाधानाय मां पर्य्यनुयोक्तुं भवतः कुतोऽधिकारः अथ विशेषत स्तन्निष्टङ्कने किं प्रयोजनमस्ति तावदेतादृशि चोद्ये परिहारो यतस्त्वयापि स्वपक्षेऽसौ स्वीकार्य्य इत्याशयस्ते सोऽपि न युक्तः

स हि मत्पक्षे चेत्समाधिरस्ति तावता तत्पक्षेपि तेन भवितव्यमित्यत्र किञ्चिदपि प्रमाणमस्ति । साम्यादेवमिति चेन्न वैषम्यस्यावश्याभ्युपेयत्वात् । यदि तद्गतमसाधारणं स्वरूपमादाय स्वदर्शनं प्रति तस्यासिद्धान्तो यो तत्र समाधिः स्यात् अत्र च त्वत्पक्षे तदभावान्न स्यात् तथा सति साम्यमात्रात्कथं समाधिरत्रावयापीति निश्चेतुं शक्यते । कोऽसौ तत्र विशेष इति चेन्न मया साकूतं तदभिधानस्य प्रस्तुतत्वमित्युक्तत्वात् । चोद्यसाम्यात् समाधिसाम्यमिति चेन्न दूष्यगतविशेषाभावभावविशेषितत्वादिनापि तद्वैषम्यसम्भवात् यथा सद्व्यवहारस्य सत्तास्वीकारकत्वे तुल्येऽपि सत्तायां तदभ्युपगमे अनवस्थया तदपाये च तदभावेन एवमन्यत्रापि बहुलं दर्शनादिति । किञ्च परोद्भावितमसिद्ध्यादिकमपरिहृत्य प्रतिबन्द्या प्रत्यवतिष्ठमानस्य कोऽभिप्रायः । किं यदिदं दोषतया परेणोद्भावितं तद्दूषणम् अदूष्येऽपि गतत्वात् उत दूषणे तदा दोषत्वस्याशक्यपरिहारात् परिहारेपि वा तस्यालक्षणत्वप्रस-

तादृशस्य लक्षणस्यासिद्धिरेव स्यादिति कृतं प्रतिबन्द्या। अथ मद्दर्शनमात्राभ्युपगतादूष्यत्वं किञ्चित्पदार्थं प्रतिबन्दीकरोति तदैतदुक्तं तेन स्यात् इह नेदं दूषणं वक्तव्यमित्यभिधानेऽनयैव युक्त्या तवेष्टभङ्गप्रसङ्गादिति। तन्न इदमिह दूषणं वक्तव्यमनभिधानेऽस्यैवानिष्टस्य परसिषाधयिषितस्य सिद्धिप्रसङ्गादित्यभिधानानुकूलाया अपि प्रतिबन्द्याः सम्भवात्। नन्वेवमेवास्तु तथाचाभिधानेऽनभिधाने चोभयतःपाशा प्रतिबन्दीरज्जुर्भवत एव दुर्निवारा स्यात्। मैवम्। मिथोविरुद्धायाः प्रतिबन्द्या स्तर्काभासत्वात् मिथोविरुद्धत्वस्य तर्कदूषणत्वात्। तत्प्रतिपक्षानुमानवत् द्वयोरपि परस्परप्रतिक्षेपेणैवोपक्षीणत्वादिति न्यायद्वितीयाध्यायप्रथमाह्निकसूत्रे च "प्रमेया च तुलाप्रामाण्यवत्,, इत्यत्रापादितदृष्टान्ताभावलक्षणदोषसाम्येन प्रत्यवस्थितं पूर्व्वपक्षवादिनं निराकर्त्तुमाचार्य्यैः समानमित्यनुत्तरमभ्युपगमात्। अभ्युपगतं तावद्भवता नास्मत्पक्षे दृष्टान्तोऽस्तीति भवनुद्योतकरो यतोभयोरित्यादि वदतो

भट्टस्य प्रतिभटीकर्त्तव्यः तत् किं प्रतिबन्द्यादिदूषणन्न भवत्येव नन्वेवं भवतोऽपसिद्धान्तः स्यादिति चेत् तर्हि दर्शयापसिद्धान्तस्य लक्षणम् प्रकृतसम्बन्धतया वाङ्मात्रेणापसिद्धान्ते भवतः किमिति नापसिद्धान्तः स्यात्। सिद्धान्तविपरीताभ्युपगमोऽपसिद्धान्तः प्रतिबन्द्यादि च भवता सिद्धान्तत्वेनाभ्युपेतं मयेदं दर्शनमाश्रित्याभिधेयमिति भवता दर्शनविशेषाभ्युपेतत्वात् दर्शनस्य च तत्तत्पदार्थस्वीकारात्मकत्वात् तेषु पदार्थेषु प्रतिबन्दीदूषणादेः प्रविष्टत्वादिति चेन्न लक्षणमेव तावदपसिद्धान्तस्य नोपपद्यते स्वसिद्धान्तविपरीतमभ्युपगच्छतोभवतोऽपसिद्धान्तप्रसङ्गात्। स्वसिद्धान्तस्तथापेक्षित इति चेन्न विशेषदूषणपूरणमन्तरेण तदलाभात् अन्यथा सर्व्वत्र विशेषणोपादानप्रयासवैयर्थ्यं स्यात्। एवमेवाभ्युपगमे भवत एवापसिद्धान्तकृत्या निष्टत्यापतेत् त्वत्सिद्धान्ते शतशो हेत्वादौ विशेषणोपादानदर्शनात्। परसिद्धान्तहेतूनाञ्चानुपात्तविशेषणानामनैकान्तिकोक्तस्य बहुशो भवच्छास्त्रे दूषितत्वात्

प्रथमं स्वशब्दं विशेषणमनुपादाय दूषणभये-नेदानीन्तत्करणे च हेत्वन्तरं नाम निग्रह-स्थानं भवतः हेत्वन्तरं हि प्रथमविशेषणं सा-धकभागमभिधाय पश्चाद्विशेषणवत्तद्वचनम्। किञ्चैवं लक्षणमभिदधानस्य भवतोऽप्राप्त-कालतायातः अप्राप्तकालोऽवयवविपर्य्यास इति लक्ष्यमभिधाय हि लक्षणाभिधानं युक्तं तस्य च भवता विपर्य्यासः कृतः एवमेवाभ्युपगमे भवत एवापसिद्धान्तात्। यस्तु प्रथमत एव सविशेषणमुपादत्ते तं प्रत्यनुपात्तविशेषण-पक्षाभिहितो दोषो वक्तव्यः। मदीयो हि सि-द्धान्तः स्वसिद्धान्त एव मम अत्र वाक्येऽभ्युप-गमपदश्रवणात् अभ्युपगन्ता लभ्यते तस्य यः स्वकीयः स स्वशब्दार्थः पर्य्यवस्यतीति चेन्न ममा-भ्युपगन्तृत्वात् मयापि हि किञ्चिदभ्युपगम्यत एव। विपरीताभ्युपगन्ताऽभिमत इति चेन्न अविशेषात्। सिद्धान्तविपरीताभ्युपगन्तेति चेन्न तथाप्यविशेषात् ममापि त्वत्सिद्धान्तविपरीता-भ्युपगन्तृत्वात्। स्वसिद्धान्तविपरीताभ्युपगन्ता तथापेक्षित इति चेन्न नूनमतिप्राज्ञोऽसि यत्

स्वपक्षमभ्युपगन्ता विशेषयितुं प्रवृत्तोऽभ्युपगन्तारमेव स्वपक्षद्वारा विशेषयसि परस्पराश्रयादपि न बिभेषि स्वपक्षेऽपि साधारण्यप्रत्यवस्थानं परोक्तं पुनस्तदवस्थमेवेति च न प्रतिसन्धत्से। यस्य यः सिद्धान्तस्तेन तत्परित्यागोऽपसिद्धान्तस्तदीय इति चेत्। नैवम्। यस्य यः सिद्धान्त इति पुरुषव्यक्तिविशेषसिद्धान्तव्यक्तिविशेषपरत्वे असाधारण्यादव्यापकत्वं लक्षणदोषः। यस्येति सिद्धान्तसम्बन्धिन इत्यर्थे तेनेति सिद्धान्तसम्बन्धिनेत्यर्थे च भवतोऽपसिद्धान्तात्। तथा हि सिद्धान्तसम्बन्धिनो मम यः सिद्धान्तः तस्य सिद्धान्तान्तरसम्बन्धिना भवता त्यागोऽस्त्येव। त्याग एव तस्य नास्ति मया परिगृहीतविषयत्वात् त्यागस्येति चेन्न यदि त्यागोऽस्वीकारस्तदा न परिगृहीतविषयतानियमः अथ, स्वीकृतस्यास्वीकारस्तदा मया स्वीकृतस्य भवता अस्वीकारो भवत्येव तथेति विशेषो नास्ति। अथ तेनैव स्वीकृतस्य तेनैवास्वीकारः सोऽपि न तेनेति स्वीकर्त्रित्यर्थे ममापि स्वीकर्तृत्वेन मया स्वीकृतस्य

भवता स्वीकारे तवापसिद्धान्तापातः। एके-नैकस्य स्वीकृतस्यास्वीकारोऽपसिद्धान्त इति चेन्न एकेनेति यद्येकसंख्यायोगिनेति तदा मम यथैकसंख्यायोगित्वं तथा तवापीति स एवाप-सिद्धान्तापातः। अथैकेनेत्यभिन्नेनेति तथापि स्वस्मादभिन्नत्वं तव च मम च मानसम् अन्य-यास्मादभिन्नत्वं न मम न वा तवेत्यपसिद्धान्त-विषयोच्छेदः। अथ स्वीकर्त्तुरस्वीकर्त्तृतो न भिन्नत्वं तदायमर्थः स्यात् स्वीकर्त्तृतो न भिन्ने-नैकस्य स्वीकृतस्यास्वीकारोऽपसिद्धान्तः तथा च स एव भवतोऽपसिद्धान्तः मया यदीयाङ्गी-कारः किञ्चित्स्वीकर्त्तुरभिन्नस्य भवतस्तदीया-स्वीकर्तृत्वात् एतेनैकस्यैकेन स्वीकारास्वीका-रावपसिद्धान्त इत्यपास्तम् मिलितयोरावयो-रपसिद्धान्तापातात्। अथ तत्स्वीकर्त्तुरेव तदस्वीकर्त्तुरभिन्नत्वमेकशब्देनाभिमतं तदापि यदि स्वीकारविषयाभिन्नत्वं तच्छब्देनोच्यते अस्वीकारविषयस्य तदा स्वीकर्त्रन्तरस्वी-कारविषयस्य भवता किञ्चित्स्वीकर्त्रभिन्नेना-स्वीकारविषयतया अस्वीकारविषयाभिन्नस्य-

स्वीकारेण भवतोऽपसिद्धान्तप्रसङ्गस्य दुर्वारत्वात्। एकेन स्वीकर्त्ता न तु भिन्नेन स्वीकारास्वीकारौ विवक्षिताविति चेन्न एकेन स्वीकर्त्रेत्येतदेव विवेचयन् भयस्तदाकर्णनमभिहित-तद्दूषणगणाव्याहत्त्यापत्त्या कथय कथं न घन-समयसमागमोदीयमानतरलतरतरङ्गिणीवेणि-जलविवर्त्तनिर्व्वर्त्तितावर्त्तचक्रचङ्क्रम्यमाणतृणक-दम्बविडम्बनामनुभविष्यसि। स्वीकृत्यास्वीकारः स इति चेन्न क्वार्थविवेचनेनोक्तबाधा-पातात् अस्वीकृत्य स्वीकारे च तदभावापत्तेः। किञ्च सिद्धान्तपरित्यक्तरि यदपसिद्धान्तोद्भा-वनं तत् किं स्वीकृतदर्शनानुमतापसिद्धान्तदू-षणाभावे वादिनि उतान्यथाभूते। आद्ये पूर्व्व-सिद्धान्तवदपसिद्धान्तेऽप्यनेन व्युत्थातुं शक्यते तत्र किं वक्तव्यं न तावन्न वक्तव्यमेव किञ्चित् पूर्व्वसिद्धान्तत्यागादेवापसिद्धान्तेन निगृहीतत्वा-दिति युक्तम् अपसिद्धान्ततत्परिहारस्य दूषण-त्वान्यतरासिद्धेः तेनाभिहितत्वात्। अन्यथा स्वाभिप्रायेणासिद्धिमुद्भाव्यैव कथां विच्छिन्द्यानो जल्पेत परासिद्धिपरिहारं नापेक्षेतेत्यपसिद्धा-

वय्यसिद्धिमुद्भाव्य परं पराजित्यात्मत्त्वं गृह्णन् प्रतिष्ठेत। निगृहीतस्य तस्यापराभिधानमनादरणीयमेवेति चेन्न अन्यतरासिद्ध्या निग्रहपरिहारस्यैव तेनाभिधीयमानत्वात् तथाप्यनादरणोऽनसिद्धावसिद्धिमुद्भाव्य पराभिधीयमानमसिद्धिपरिहारमनादृत्य विजयेतैवेत्युक्तम्। अथ मन्यसे मध्यस्थेनैव तद्विचारणीयं किमनसिद्धावनेनासिद्धिरुक्ता अनपसिद्धान्ते वापसिद्धान्तः एतद्विचार्य्यते नैव जयपराजयाववधारणीयौ एतदर्थमेव मध्यस्थोपस्थापनमिति न तर्हि वादिना साधनेऽभिहिते दुष्टमेतदित्यभिधायैव प्रातिवादिना निवर्त्तनीयं मध्यस्थस्तु परमार्थतोदुष्टत्वमदुष्टत्वं वा तस्य साधनस्य विचार्य्य जयपराजयाववधारयिष्यति सोऽयं प्रश्नस्य निर्वृतोभूतपिकदाम्पत्यामत्यपोषणकृतमहायासवायसव्यसनं समासादयिष्यति मध्यस्थोवराकस्तावकदुष्परामर्शप्रकर्षेण। अथोच्यते सम्प्रति विप्रतिपद्यतां नामापसिद्धान्तेऽप्यसौ किमेतावता पूर्व्वं स्वीकृतापसिद्धान्तदूषणाभावस्य दर्शनस्य तावत्तेन स्वीकरणमकारि

तद्वैवादायापसिद्धान्तस्योपन्यासो युक्त इति।
नैवम्। यदीदानीन्त्वन्यननुमतिरस्य नाद्रियते
अस्यामुपजातायामपि प्राक्तनानुमतिमादायैव
च दूषणप्रवृत्ति स्तदापसिद्धान्तस्यापि कुतो-
ऽवकाशः स हि पूर्व्वानुमतस्येदानीमननुमति-
माश्रित्यैव प्रवर्त्तते नान्यथा। तस्मात् स्वोक्त-
तापसिद्धान्तदूषणभावमपि वादिनं प्रति वि-
प्रतिपत्तिकाले साधनीयमपसिद्धान्तस्य दोषत्व-
मिति द्वितीयानवकाशः। यस्य तु सौगतादे-
र्मतेऽपसिद्धान्तो न दूषणं तं प्रत्यवश्यं साध-
नीयमेवास्य दूषणम्। नच वाच्यं योऽपसिद्धान्ते
विप्रतिपत्तिं करोति तं प्रति व्याघातएवाभि-
धेयः दर्शनविशेषं स्वीकुर्व्वता प्रथमं तद्दर्श-
नान्तर्निवेशितः प्रतिवन्दीदूषणत्वादेस्तेन स्वी-
कारात् पश्चात्तस्यैवास्वीकार स्तावेतौ स्वीकारा-
स्वीकारावेकेनैकस्य व्याहताविति। यद्यय-
मपसिद्धान्तात्मैव व्याघातः तदापसिद्धान्तदूषण-
त्वेऽपि विप्रतिपन्नस्य विप्रतिपत्तिमभ्युदस्य
मभिधातुं युक्तः। अथ दूषणान्तरमयं व्याघा-
तोऽपसिद्धान्तमनुपजीव्य सम्भाव्यमानोद्भावन

स्तदा सार्व्वत्रिकापसिद्धान्तोदाहरणेऽयमेवास्तु किमपसिद्धान्तस्य दूषणत्वाङ्गीकारेण। किञ्चैवमपसिद्धान्त उद्भाविते पश्चात्तद्विप्रतिपत्तावुपजात यामपसिद्धान्तमुपेत्य व्याघातलक्षणस्यास्य दोषान्तरस्याभिधाने प्रतिज्ञाहान्यापत्तेः प्रतिज्ञाहानिः स्वीकृतोक्त त्याग इति। एवं प्रथमं किञ्चिद्दूषणमुक्त्वा तत्परिहारेणि दूषणान्तराभिधाने न प्रतिज्ञाहानिरिति गतं प्रतिज्ञाहान्यादिभिर्निग्रहैः। प्राक् प्रतिज्ञातदोषनिर्व्वाहार्थमेव निग्रहान्तरकथनान्नैष दोष इति चेन्न पूर्व्वनिग्रहपरिहारमकृतवति तेनैव पराजिते निग्रहान्तरोपन्यासस्यायुक्तत्वादिति। न चानेन भयेन भवता व्याघातएवाभिधेयः प्रथमं नापसिद्धान्त इति वाच्यमपसिद्धान्तवैयर्थ्यप्रसङ्गात् सर्व्वत्रापसिद्धान्तोदाहरणे व्याघाताभिधानस्यैवमङ्गीकर्त्तव्यत्वात्। न हि क्वचिच्छक्यतेऽवधारयितुं मयापसिद्धान्तउद्भाविते नायं विप्रतिपत्स्यत इति। नन्वेवं विप्रतिपन्नं प्रति अपसिद्धान्तस्य दूषणत्वं प्रसाधनीयमिति। नैवम्।

येनाप्यस्वीकारदण्डेन दूषणेन तत्स्वीकारयिष्यसि तदनङ्गीकारस्यापि सम्भवात्। उक्तञ्च सौगतैः न हि शास्त्राश्रया वादा भवन्तीति नापसिद्धान्तो निग्रहाधिकरणमिति "रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः। विलम्बा वत केनामी सिद्धान्तविषयाग्रहा इति।,, तत्र कश्चिदाह शास्त्रमनाश्रित्य कथारम्भानुपपत्तिः यदा हि क्षणभङ्गसाधनप्रयोक्ता अस्फूर्त्तिमता स्थिरवादिना सिद्धसाधनमुद्भाव्य निगृह्यते तदा किं कुर्य्यात्। प्रथमविप्रतिपत्तिविरोधमुद्भावयेदिति चेत् एवं तर्हि विप्रतिपत्त्यनुगुणप्रमेयान्तरव्यतिक्रममप्युद्भावयेदेव अन्यथा विप्रतिपत्तिव्यतिक्रममप्युपेक्षेत न खलु तत्तदनुगुणव्यतिक्रमयोर्विरोधापत्तिं प्रति कश्चिद्विशेषः न चैकपुरुषार्थानुगुणाङ्गाङ्गिभावव्यवस्थितपदार्थजातव्युत्पादनादन्यच्छास्त्रं नाम तस्मात् क्षणिकत्वस्वीकारे तदनुगुणापोहादिसमस्तस्वीकारः तदेकपरिहारे वा समस्ततदनुगुणपरिहार इति सर्व्वज्ञोऽपि नान्यथा प्रमातुं क्षमः। न च समस्ततदनुगुणपदार्थ-

जातं कथारम्भे स्वपक्षेणाभिधातुमुचितं तदैव शास्त्रप्रणयनप्रसङ्गात् परिषदनपेक्षितत्वाच्च। नच तद्व्यतिक्रमोद्भावनाय समस्ततदनुगुणोक्तः परस्परस्य शास्त्रमनाश्रित्य शक्यः। नच तदनुगुणव्यतिक्रमे तदुपेक्षणे वा तत्त्वप्रतिपत्तिजयाविति अकामेनापि तदधिकारप्रवृत्तं शास्त्रमेवाश्रयणीयमिति। तदेतदपेशलं किं तदनुगुणं प्रमेयान्तरं यदनभ्युपगमे विरोधमुद्भावयेदित्युच्यते द्वयमभ्युपगम्यं सम्भवति एकं तदाद्यदनभ्युपगमे कथैव प्रवर्त्तयितुमशक्या यथा प्रमाणादि सर्व्वकथकसिद्धम् इतरत्तु प्रतिदर्शनसिद्धं किञ्चित् यथा क्षणभङ्गेश्वरादि तत्र यदि प्रथममभ्युपगम्यैव कथाप्रवृत्तिरिति तत्स्वीकारे पश्चात्तदनङ्गीकारोऽपसिद्धान्तस्तत्र स्वव्याघातकत्वेन तस्य भवद्भिरेव जातित्वाङ्गीकारात् जातेश्च निरनुयोज्यानुयोगे निवेशात्। नापि द्वितीयः दर्शनभेदनियतं हि क्षणभङ्गादि यत्कथारम्भेऽप्युपगन्तव्यं तत् किं तदभ्युपगमस्य प्रकृतसाध्यापोढाभ्युपायतया उत तन्नान्तरीयकतया। न प्रथमः क्षणभङ्गसा-

धनप्रस्तावे अपोहादि परित्यजतः सौगतस्यापसिद्धान्ताभावापत्तेः तदभ्युपगमस्य तदनुपायत्वात्। अन्योन्याभ्युपगमोपायत्वे चान्योन्यविचारस्य निष्पत्तिरेव स्यात् विचारे सति प्रामाणिकत्वप्रतीतौ तदभ्युपगमः तदभ्युपगमे च विचार इति अभ्युपगतोपायत्यागविषय एवायमपसिद्धान्तो नान्यत्रेति चेन्न यो हि यदुपायः तमभ्युपगम्य विचारः प्रवर्त्तयितव्य इत्येव कुतः तस्योपायतया तेन विचारः प्रवर्त्तयितव्य इत्येव युक्तं न तु तदभ्युपगमोऽपि तावता तदुपायः स्यात् तस्य च तदभ्युपगमस्य च पृथक्कारणमभ्युपगमे प्रमाणस्योपदर्शयितुमशक्यत्वात् शक्यत्वेऽपि वा तत्रापि स्वाभ्युपगमः किमित्यभ्युपेयो वैयर्थ्यात् उपायत्वादेव परस्य तथा प्रतीत्युपपत्तेः। यथोच्यते उपेयमुपायेन साधयता उपेयवदुपायस्यापि सत्त्वमुपगन्तव्यमिति पश्चात्तदनुपगमेऽपसिद्धान्तोपन्यासः सावकाशः असत उपायत्वानुपपत्तेः। तच्चोपायत्वेनोपन्यसनात्तत्त्वाभ्युपगमस्तस्य साक्षादश्रुतोऽप्यसत्त्वेनाभ्युपगम्यमानं

स्वोपायत्वस्वीकारानुपपत्त्या कल्पनीयः कश्चि-
तेन तेन श्रूयमाणतत्त्वानभ्युपगमविरोधादप-
सिद्धान्तोऽभिधेयः। एवञ्च सति सत्त्वानभ्युप-
गम एवोपायत्वानुपपत्तिप्रसङ्गो दूषणमुच्यता-
मुपजीव्यत्वात् तदुपन्यासमन्तरेणाश्रूयमाण-
तदीयाभ्युपगमस्य दर्शयितुमशक्यत्वात् कृतं
तदुपजीविना पश्चात्तनेनापसिद्धान्तेन। अत-
एव न द्वितीयः तन्त्रान्तरीयकाभ्युपगमोऽपि
हि तत्त्वानभ्युपगमे साध्यस्याभावापत्त्यानु-
मन्तव्यः तथा च सैव दूषणमस्त्वनभ्युपगमे कृतं
तया अभ्युपगमं परिकल्पने नानभ्युपगमवि-
रोधादपसिद्धान्तोपन्यासेनेति।

एवं निग्रहान्तरे खण्डनमूहनीयम्।

इति खण्डनखण्डखाद्ये निग्रहानिरुक्तौ
द्वितीयः परिच्छेदः।



# तृतीयः परिच्छेदः।



अथ यान्यवलम्ब्य बहुलं वाग्व्यवहारा-स्तेषां सर्व्वनाम्नामर्थाः कथं निर्व्वाच्याः। तथा-हीश्वरसद्भावे किं प्रमाणमिति ब्रुवाणः प्रति-वक्तव्यः किं शब्दोऽयमाक्षेपार्थो वा कुत्सितार्थो वा वितर्कार्थो वा प्रश्नार्थो वा स्यात्। तत्र यदि प्रथमः पक्षः तदेश्वरसद्भावे नास्ति प्रमाण मित्युक्तं स्यात् तथा च सति न प्रतिज्ञामात्रा-त्साध्यसिद्धिरिति हेत्वादिकं वाच्यं भवति तच्च भवता नाभ्यधायि तस्मान्न्यूनत्वं दोषः अतएव न द्वितीयः ईश्वरसद्भावे कुत्सितं प्रमा-णमित्यस्यापि प्रतिज्ञामात्रत्वात्। अपि च साध्यासाधकत्वाद्वा तत्कुत्स्यते भवता अन्यथा वा। अन्यथा चेदलं तदुद्भावनया साध्यसिद्धेर-प्रत्यूहत्वात्। नापि प्रथमः प्रमाणञ्च साध्या-साधकञ्चेति व्याघातात् गौणोऽयं प्रमाणशब्द-इति चेन्न प्रामाण्ययोगिनि यद्ययं प्रमाण-

शब्दप्रयोगः तदा गौणत्वव्याघातः मुख्यत्वात् । अथ प्रमाणाभासे तदा चलत्तदुद्भावनया ईश्वरसद्भावे यः प्रमाणभासः स कुत्सितइत्यत्र परस्यापि सम्प्रतिपन्नत्वात् ईश्वरसद्भाव इति च विशेषोपादानं व्यर्थं स्यात् अन्यथापि हि विषये प्रमाणाभासः कुत्सितएव साध्यासाधकत्वात् । नापि तृतीयः तथा सति हि वितर्कस्य पक्षान्तरस्यापि सत्वेन पक्षान्तरमपि वचनीयं भवति ईश्वरसद्भावे किमेतत् प्रमाणमुतान्यदिति तच्च भवता नाभ्यधायि अतोन्यूनत्वं दोषः। नापि चतुर्थः प्रश्नार्थात् खलु किं शब्दात्कस्यचित् पदार्थस्य जिज्ञास्यमानता प्रतीयते सा तेन प्रमाणपदसमभिव्याहारात् प्रमाणविषयिणी प्रतीयते यद्विषयश्च प्रश्नस्तद्‌[illegible]नाभिधेयं तत् अयं प्रश्न ईश्वरसद्भावे प्रमाणसामान्यविषयस्तद्विशेषविषयो वाभिप्रेतः आद्यश्चेदीश्वरसद्भावे प्रमाणमित्येतावन्मात्रोक्त यद्विषयोहि प्रश्नस्तदभिधेयं प्रमाणसामान्यविषयश्च प्रश्नः तच्च प्रमाणशब्देनाभिधीयतएव । अथ द्वितीयः तथापीश्वरसद्भावे प्रमाणमित्येतावत्मात्र-

मापद्येत यथा प्रश्नवाक्ये प्रमाणशब्दो विशेषपरं तथोत्तरवाक्येऽपि । कोसौ विशेषइति चेन्न पूर्व्ववदुक्तत्वात् अत्रापि प्रश्नस्य विशेषोविषयः किं शब्दस्य विशेषशब्देन सामानाधिकरण्यात् तथाच सति विशेषएवोत्तरं स्यात् । स्यादेतत् विशेषशब्देन न विशेषमात्रमनिर्द्धारितमत्र विवक्षितं किन्त्वसाधारणी व्यक्तिस्तत्र विशेषशब्दस्य तात्पर्य्यं तस्मात्का सावधारणी प्रमाणव्यक्तिरिति प्रश्नार्थः तत्र च तादृश्याः प्रमाणव्यक्तेरभिधानमुत्तरं युक्तं नैवम्बिधाः प्रलापाइति नैतदेवं यतोऽत्रापि विशेषइत्येवोत्तरं यथा प्रश्नवाक्यगतस्य विशेषशब्दस्य सर्व्वतोव्यावृत्तस्वरूपायां प्रमाणव्यक्तौ तात्पर्य्यं तथोत्तरवाक्यस्थितस्यापि एवञ्च सति यत्र विषये भवदीयस्य प्रश्नवाक्यस्य तात्पर्य्यं तदेवास्माकमुत्तरवाक्येन प्रतिपादितमिति युक्तमुक्तम् अथ मन्यसे किमिह प्रमाणमिति पृच्छतोऽयमभिप्रायः यत्रार्थेऽनुमानं प्रमाणमितरद्वेति । अत्राप्यनुमानमित्युत्तरमस्माकं किं तदनुमानमिति चेत् । अयमपि प्रश्नोऽनुमानमात्रविषयः

चत तद्विशेषविषयइति विकल्प्य प्रमाणप्रश्न-
तदुत्तरं वाच्यमिति। अत्र च संग्रहश्लोकौ।
“यथाविधं यं विषयं नियम्य प्रश्नस्य निर्वक्ति
परो यथोक्त्या। वाच्यस्तथैवोत्तरवादिनापि
तथैव वाचा स तथाविधोऽर्थः। प्रश्नस्य यः स्या-
द्विषयः स वाच्यो वाचा तया वैष भवेन्निरुक्तः।
इदं त्वयाव्याख्यातमेतयैव गिरा स्वपृच्छाविष-
यस्य वक्ता।” प्रश्नार्थश्च किं शब्दाज्जिज्ञासा-
विषयतार्थस्य प्रतीयते जिज्ञासा च ज्ञातु-
मिच्छा इच्छा च नाज्ञाते भवत्यतिप्रसङ्गात्
तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छता तत्र
स्वज्ञानमिच्छाकारणीभूतं वक्तव्यं तदयथार्थं
यथार्थं वा स्यात् यथार्थञ्चेत् तर्हि तेनैव
ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते
विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थ-
त्वस्य वक्तुमशक्यत्वात्। तेनापि प्रमाणेन
स्वगोचर ईश्वरसद्भाव उपस्थाप्यत इत्यनायासे-
नैव सिद्धोऽस्माकमीश्वरसिद्धिमनोरथः। अथा-
यथार्थं तदा तस्मिन्नयथार्थज्ञानविषये यत्नवा-
भिरयथार्थमेव ज्ञानमुत्पादनीयमिति भवतः

यच्छतोवाञ्छितं तदा केयं स्वाधीनेऽर्थे परापेक्षा भवानेवायथार्थज्ञानोत्पादनकुशलो यथैवं तव मिथ्याज्ञानमजीजनत्तथा परमप्युत्पादयतु वयं पुनर्यथार्थज्ञानस्योत्पादयितारो मिथ्याज्ञाने सर्व्वथैवाकृतिनः किमिह नियुज्येमहीति। अथ मदीयस्यायथार्थज्ञानस्य योविषयः स मदीययथार्थज्ञानविषयोभवता क्रियतामिति त्वदीयं वाञ्छितं तदा व्याघातादोषग्रस्यैर्भवतः प्रवृत्तिरेवानुपपन्ना शुक्तिका रजतत्वेन मम यथार्थज्ञानविषयोभवत्वित्येतदर्थं प्रेक्षावान् कथङ्कारं प्रयतेत येन रूपेणायथार्थज्ञानविषयत्वं तेनैव रूपेण यथार्थज्ञानविषयत्वे व्याघातात्। अथ परस्य स्वसिद्धान्तमनुसन्धानेन त्वया यथार्थज्ञानं तत्रोत्पादनीयमतस्तदर्थं भवाननुयुज्यत इति। मैवम् यदीश्वरसद्भावविषयोभवता प्रमाणाभासः प्रमाणतया भ्रान्त्या प्रतीतः तस्य प्रमाणत्वं अस्माभिर्व्युत्पादनीयमिति नास्माकमीदृशः सिद्धान्तः प्रत्युत ईश्वरसद्भावविषयं यत्प्रमाणं भवता प्रमाणाभासत्वेन भ्रान्त्या प्रतीतमस्ति तत्प्रमाणनीय-

मिति। स्यान्मतम् ईश्वरसद्भावविषयस्य प्रमाणस्य भवता ज्ञापनमात्रं क्रियतामित्यभिमतं पृच्छतामस्माकं नतु प्रमाणेनाप्रमाणेन वेति विशेषोऽप्यभिमत इति न ज्ञापनमात्रस्याप्रमाणस्यागमादावप्युपपत्तेः तत्र स्वाधीने केयं प्रश्नपेक्षेत्याद्युक्तमनुषञ्जनीयम्। स्यादेतत् येयमीश्वरसद्भावविषया प्रमाणप्रतीतिरस्माकमुत्पन्ना सा व्यभिचारिणी सत्या वेति संशयोऽत्रास्माकं तेनैकपक्षनिर्द्धारणाधीनं यदिदं दूषणमवादि भवता तन्निरवकाशमिति नैतदस्ति एवं हि तस्यां प्रतीतौ यथार्थत्वायथार्थत्वसंशयेन तस्याः प्रतीतेर्गोचरो यत्प्रमाणं तस्यापि योऽसौ विषय ईश्वरसद्भावस्तत्र सर्व्वथैव संशयानस्य भवतः प्रश्नोऽयं नतु विप्रतिपन्नस्येति। स्यात् तथाच स्वीकृत्य शिष्यभावं प्रसाद्य चिरं चरणशुश्रूषाभिरस्मान् छेत्स्यामस्ते संशयमिति विप्रतिपन्ना एव वयमाचार्य्याः संशयोऽस्माकमिति चेत् तर्ह्यवधृतैककोटय एव वयं कार्य्यानुरोधात्तु संशयमात्रमात्मन्युक्तं स्यात् एवं तर्हि तदेव कोट्यवधारणं भवता स्वसमर्थ-

मयथार्थं वेति विकल्पोक्तानुपपत्त्या दूरापेतयम्।
एतेनानध्यवसायेन तदस्माभिः प्रतिपन्नमि-
त्यपि निरस्तं वेदितव्यं व्यभिचारिविषयमव्य-
भिचारविषयं वा तदिति विकल्पाभ्यां तस्यापि
ग्रस्तत्वात् परस्परविरोधे हि न प्रकारान्तर-
स्थितिरिति न्यायात्।

एवमीश्वराभिमन्यादावपि तत्तत्स्थाने
तिष्ठत्सर्व्वनामासान्तरखण्डनमनुद्रष्टव्यम्।

इति खण्डनखण्डखाद्ये सर्व्वनामार्थनिरुक्ति
स्तृतीयः परिच्छेदः।



चतुर्थः परिच्छेदः।

ननु तथापि भावात्मके तस्मिन्नीश्वरे विधा
यकं किञ्चित्प्रमाणं वक्तव्यमिति चेत् किं पुन-
र्भावत्वं विधित्वमिति चेन्न पर्य्यायप्रश्नात्।
स्वरूपसत्त्वमिति चेत् अभावस्यापि तथाभावात्
प्रतिस्वं स्वात्मत्वेनाननुगतत्वापत्तेश्च। अः

स्तीतिप्रतीतिविषयत्वमिति चेन्न अभावा-
घटस्यास्तीति प्रत्ययसम्भवेनाभावस्यापि तथा-
त्वप्रसङ्गात्। नास्तीतिप्रतीतिविषयत्वेऽपि च
घटादेर्भावनिवृत्तेः। अस्तीति चास्त्यर्थो वा
शब्दो वा विवक्षितः नाद्यः तस्यानिरुक्तेः। सत्ता
तदर्थ इति चेन्न सामान्यादीनां तदभावाद-
भावत्वापत्तेः स्वरूपसत्त्वञ्च निरस्तम्। नापि
द्वितीयः अभावोऽस्तीतिप्रतीतेर्निरुक्तत्वात् वर्त्त-
तइत्याद्याकारेण च प्रतीयमानस्याभावत्व-
प्रसङ्गात्। सोऽप्यस्ति पर्य्याय इति चेन्न उभय-
साधारणैकार्थं निर्व्वचनमन्तरेण पर्य्यायत्वस्य
प्रतिपादयितुमशक्यत्वात्। यत्रैकस्यास्तिपद-
प्रयोगः तत्रैवापरस्य वर्त्तत इति प्रयोगात्।
सामान्येन तावत् पर्य्यायत्वं शक्याधिगममिति
चेन्न प्रमेयाभिधेयादिशब्दानां तथात्वेऽप्यपर्य्या-
यत्वात् यत्नेत्यस्य प्रवृत्तिनिमित्तार्थत्वे च तन्नि-
र्व्वचनप्रसङ्गस्तदवस्थः स एवार्थोभावत्नमुच्यतां
किं शब्दोल्लेखगवेषणया। अपरप्रतिषेधात्म-
कत्वं भावत्वमिति चेन्न व्यवच्छेद्यासम्भवेना-
परपदवैयर्थ्यात् भावाभावयोः परस्परप्रति-

षेधात्मकतास्वीकाराच्च । तथापि भावो नास्तीत्यभावप्रतीतिर्यस्त्वदभावोनास्तीति भावस्याप्रतीतिरीति चेन्न तावतापि लक्षणानिरुक्तेः । अपरप्रतिषेधमुखेन प्रतीयमानत्वमेव भावत्वमिति चेन्न चक्षुरादिभिर्भावत्वाग्रहणप्रसङ्गात् । नहि प्रतीयमानत्वं चक्षुरादिग्राह्यम् अभावोनास्तीतिप्रतीतेर्निर्विषयत्वप्रसङ्गाच्च न ह्ययं भावविषया भवत्यस्ते परप्रतिषेधमुखेन प्रतीयमानत्वात् । नाप्यभावविषयैव तन्निषेधार्थत्वात् । नैवं प्रतीतिरेव स्यादिति चेन्न शाब्द्याः प्रतीतेः सम्भवात् आकाङ्क्षादिमद्भिः पदैः प्रतिस्वं संसर्गबोधनात् अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि । प्रत्यक्षप्रतीतिस्तथा विवक्षितत्वादयमदोष इति चेन्न सर्व्वस्य भावस्य प्रत्यक्षत्वानङ्गीकारात् सेश्वरपक्षे सर्व्वं प्रत्यक्षमिति चेन्न तेन तेषामपरप्रतिषेधात्मतया ग्रहणे प्रमाणाभावात् । तेषां विधिरूपतया तथैव ग्रहणमिति चेन्न विधिरूपत्वस्यानवधारणात् । यदपरप्रतिषेधात्मकतया शब्देनापि बोध्यते सत्तावत् भावरूपमिति चेन्न

परमेव वैयर्थ्यं तत्त्वागोऽयचक्षुषाऽऽविषयकोः सुरभि चन्दनमित्यादाविवान्योपनीतभागवत् तत्र वा चाक्षुषत्वं भविष्यतीति चेन्न तथाविधे-नैव विषयेण विशिष्टाया बुद्धेर्विषयविशेषणता-ग्रहे स्वाश्रयोऽप्यंशतः स्यात्। तेनोपलक्षिताया-स्तथात्वे चाभावविशिष्टभावग्रहार्थस्याभावस्य तथात्वापत्तेः। यदेवंविधं तद्भावरूपमिति नियमानुपपत्तेः। अस्योपलक्षणत्वे चोपलक्ष्यस्या-न्यस्य वाच्यत्वात् अस्यैव भावार्थत्वे चाभावोना-स्तीति कृत्वा प्रतीयमानस्य भावस्य भावत्वाभा-वप्रसङ्गात्। भिन्नञ्च भावत्वं न सम्भवति यत् पदार्थ व्यतिरेक प्रसङ्गात्। यच्च किञ्चिद्भावत्वं तत्स्वात्मन्यस्ति नोवा अस्ति चेदात्मनि वृत्ति-विरोधः नास्ति चेत्स्वस्यान्यप्रतिषेधमुखेन चा-प्रतीयमानस्याभावत्वप्रसङ्ग इति।

नन्वेवमीश्वरे प्रमाणानुपदर्शनात्तदभाव एवापद्यत इति चेत् अभावत्वं किमभीयते निषेधात्मकत्वमिति चेत् यद्यपि प्रतिक्षेपा-त्मकत्वं तदा भावेऽप्यस्ति भावाभावयोर्द्वयोरपि परस्परप्रतिक्षेपात्मकत्वस्वीकारात्। अथाभा-

वत्त्वमेव तदा न निवृत्तः पर्य्यनुयोगः एतेन निषेध मुखेत प्रतीयमानमिति निरस्तम् । भावविरोधित्वमिति चेन्न सर्व्वभावविरोधित्वं तद्विशेषविरोधित्वं वा । नाद्यः असिद्धेः नहि घटाभावोभूतलादि विरुद्धोहि । न द्वितीयः भावानामपि केषाञ्चित्तथाभावात् । अथास-ह्यानवस्थानं विरोधो विवक्षितः स भावानां नास्तीति चेन्न गोत्वादौ तस्यापि भावात् । एकविधावन्यनिषेधः स इति चेन्न भेदे विरो-धिभावभेदयोरेव प्रसङ्गात् । एकविधिरेवा-परनिषेधः स इति चेन्न निषेधस्याभावार्थत्वे भावार्थत्वे चासिद्धेः । नास्तीति प्रतीयमानत्व-मिति चेन्न घटाभावोनास्तीति घटस्य तथा-प्रतीयमानतया अभावत्वापत्तेः अस्तीति भावत्व निरुक्तौ यदुक्तं दूषणं तदापत्तेश्च । प्रतियो-गिनिरूपणाधीननिरूपणत्वमिति चेन्न प्रति-योगिनः परार्थत्वेऽतिप्रसङ्गात् विरोध्यर्थत्वे वेदनिरुक्तेः असदर्थत्वे नञर्थस्यासिद्धेः अतीतानामतञ्चवादौ विषयादिनातिप्रस-ङ्गात् । यच्च किञ्चिदभावस्य लक्षणमुच्यते स

भावोऽभावो वा स्यात्। नाद्यः भावस्याभावानाश्रितत्वात् विषयिधर्मत्वे च कथञ्चिदपि तथात्वे तन्निर्व्वाच्यं स्यात्। अन्यदेव तद्वदिति चेन्न तद्वदभावस्याभावत्वे स्वरूपहानि: भावत्वे च व्याघातात्। न द्वितीयः तस्यात्मनि वृत्तौ विरोधापत्तेः अवृत्तावव्यापकत्वप्रसङ्गादिति। प्रतियोग्यविशिष्टमेव यत् प्रतिभाति सोऽभावइति चेन्न प्रतियोग्यनिरूप्यत्वे प्रतियोग्यानिरूपणे: विशिष्टशब्दार्थस्य निर्व्वचनीयः स्यात् तत्र विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वा। नाद्यः दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः दण्डिनमानयेत्युक्ते तदनयनप्रसङ्गाच्च। तत्सम्बन्धेनोपलक्षितत्वात्तथेति चेन्न अतद्रूत उपलक्ष्यत्वेऽतिप्रसङ्गात्। तद्वतश्चान्यत्वात् सम्बन्धोहेतुः स च तदधिकरण एवेति चेन्न सम्बन्धात्तदधिकरणसम्बन्धान्तरत्वापत्तेरित्येष न पन्थाः। तत्सम्बन्धिनि तत्र व्यवहारइति चेन्न तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्तुमशक्यत्वात्। एवं परम्पराकल्पनायामप्यन-

वस्थाभाव नहु व्यवहार्य्यगतोविशेषः कश्चित्। द्वितीये तु प्रत्येकं दण्डव्यवहारप्रसङ्गाविशेषा भावात् न ते प्रत्येकं दण्डपदार्थाः किन्तु मिलिताइति चेत् मिलिताइति किं ते च मेलकं चाभिधीयते उत तेभ्योऽन्यएव कश्चित् आद्ये प्रत्येकं सएव प्रसङ्गः मेलकेप्यधिकः। द्वितीयस्तु प्रतीतिव्यवहारविरोधात्पूर्व्वंनिरस्तः। एकज्ञानारूढौ वा अविरलनानाज्ञानारूढोवानेकस्य सम्बन्धस्य विशिष्टपदार्थइति चेन्न घटपटाविति बुद्ध्यावारूढौ घटपटौ सम्बन्धस्य घटपटरूपोविशिष्टः स्यात्। घटत्वपटत्वसम्बन्धानां तद्बुद्ध्यावारूढानामभ्युपगमेन सम्बन्धस्यापि तद्बुद्ध्यारोहोपगमधौव्यात् अन्यथा घटत्वविशिष्टरूपो घटः पटत्वविशिष्टरूपश्च पटः कथमभ्युपेयस्तत्र। नच घटपटावित्यपि विशिष्टमेव स्वतन्त्रयोः घटपटयोः परस्परासम्बन्धयोस्तत्र व्यवहारात् न पुनर्यथा दण्डो पुरुषस्तथा घटी पटः पटी घटइति वा तत्र व्यवहारः। न चैकज्ञानाध्यारूढतैव तयोर्न मन्तव्या यतोघटपटाविति द्वित्वं तयोस्तद्बुद्ध्यावगमाद्विना कथं विज्ञानेना-

नगाच्छेतेति प्रत्यभिज्ञाप्रस्तावोक्तान् दोषा ना-
ऽऽख्यामः । अतएवाविरलनानाज्ञानारूढतापि
विशिष्टता निरवकाशा अथाप्रकाशमानासम्ब-
न्धोऽनेक एकबुद्ध्यारूढस्तथा नचैवं घटपटौ
तत्कथमुक्तदोषापत्तिरिति चेन्न अप्रकाशमा-
नोऽसम्बन्धोऽनयोरित्यधर्म्यधर्म्यो विशकलितइति
घटत्वपटत्वधर्म्यत्वादिभेदेनापि तत्र सम्ये-
ताविशेषात् । अथ धर्म्मधर्म्मिसम्बन्धाः स्वातन्त्र्या
एवैकबुद्ध्यारूढास्तथा नच घटपटौ धर्म्मधर्म्मि-
रूपाविल्यनतिप्रसङ्गइति चेन्न धर्म्मत्वस्यैवास्य
दण्डादिगुणादिसाधारणस्य वक्तुमशक्यत्वात् ।
सोऽप्येष्टव्य इति चेत् इष्यतां परं तस्यापि
वालुकावद्विशकलितस्योपगन्तव्यत्वेन धर्मोऽयं
किन्न धर्म्मः स्यात् । तथाप्रतीत्यभावान्न स्या-
दिति चेन्न त्वदुक्तैकप्रतीत्यारोहस्याविशेषे
प्रतीतिरपि तथा किन्न स्यात् मा तु धर्म्मत्व-
मनुगतं तत्तद्रूपादिपदार्थस्वरूपमेव तथा वि-
चित्रं यत्तदेव धर्म्मिणा सम्बन्धेन च सममेका-
बुद्ध्यारूढं विशिष्टं जात्यादिनि चेन्न तेषां
स्वरूपाणां भेदेन नानास्वरूपेषु विशिष्टेषु अनु-

शता विशिष्टबुद्धिर्न स्यात् । सम्बन्धमपि तर्हि विलुप्यैवं स्वभावादेव रूपादिकं तथाविधमाधत्ताम् एकमपि किन्न स्यादिति चेत्तर्हि वराके धर्म्म्यपि विलुप्यतां यथा विना सम्बन्धं विशिष्टबुद्धीरूपादिस्वभावसामर्थ्यात् समर्थिता तथा विना धर्म्मिणमप्यास्थीयतामिति जितं जिनैः स्यादेवं यदि शुक्ल इत्येतावन्मात्रमेव प्रतीयेत किन्तु शुक्लः शङ्ख इत्यादिना प्रत्ययेन सामानाधिकरण्यमनुल्लिखता धर्म्मिणमपनीय दीयत इति चेन्न शङ्खत्वजातेरूपादेर्वा रूपादेरविरलतादृगवस्थितस्य वा स्वरूपवैलक्षण्यमेव तत्पदेऽभिषिच्यतां येन विनाप्यधिकरणं सामानाधिकरण्यव्यवहारः स्यात् । किञ्च नैतावन्मात्रं बुद्धिमादाय तदर्थगतवैचित्र्यान्तरखण्डने बुद्धिरेव स्वाकारसामर्थ्यात्तयोन्यिता तत्तद्व्यवहारप्रसविनी स्वीकियतां कृतमर्थव्यसनेन तस्मात् "प्रत्येतव्यस्य वैचित्र्यं प्रत्ययोल्लेखसाक्षिकं । धियं निवेश्य लुम्पन्तो भङ्गं सांख्येव यच्छति ।" यत्तु केनचिदभावस्य स्थाने तन्मात्रधीरभिषिक्ता तत्तस्य परमुचितं ।

"गुरुर्द्वियमभावस्य स्थाने स्थानेऽभिषिक्तवान्।
प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः।,,
अपि चैकबुद्ध्यारूढोनेकश्च. सम्बन्धश्च विशिष्ट-
इति पक्षे योप्येवंरूपवैलक्षण्यभाग्विशिष्ट इति
कथ्यते सोप्ययं विशिष्टोऽविशिष्टाद्वैलक्षण्येन
बोध्यमानो ज्ञानमन्तर्भाव्यैव स्यादिति तत्र
तत्रापि ज्ञानान्तरनिवेशने अनवस्था क्वचिद
निवेशे तदभावादविशिष्टत्वे शेषस्यामूलमवि-
शिष्टत्वापातः। तद्योग्यस्तथेति चेन्न तर्हि
योग्यतापि तद्विशेषणं वालुकाबदसंलग्नाति-
प्रसङ्गिकैवेत्युक्तमावर्त्तते। एवमेकमिति ज्ञान-
मित्यारूढमित्यादिद्वारैरपि द्रष्टव्यम्। तथाहि
"अविशिष्टाद्विशिष्टस्य वैशिष्ट्ये यदि धीर्वि-
शेत्। तद्बुद्धिधाराविश्रान्तिः स्याद्वा मूलावि-
शिष्टतेति,, विशिष्टनिरासेन च सर्व्वाणि
लक्षणानि निरस्तानीति मन्तव्यं यथा गुणा-
श्रयोद्रव्यमित्यादि। इतोऽपि गुणाश्रयोद्रव्य-
मित्यसङ्गतं तथाहि कथमेतल्लक्षणमवधार-
णीयं संख्यारूपगुणवत्तया रूपादेरपि प्रतीतेः।
भ्रान्तिरसाविति चेत् पृथिव्यादौ कथमभ्रा-

न्तिरिति वक्तव्यं तत्र बाधकाभावादिति चेत् तुल्यं गुणस्य गुणवत्तायां बाधकमस्माभिरवश्यं वक्तव्यं निर्गुणा गुणाइतिसिद्धान्तादिति चेन्न रूपादेर्गुणत्वस्यैव निश्चेतुमशक्यत्वात् । सामान्यवान् गुण इत्यादिगुणलक्षणयोगात्तन्निश्चय इति चेन्न अगुण इति गुणलक्षणांशस्यासिद्धेः संख्यावत्तया प्रतीतेर्विद्यमानत्वात् । भ्रान्तिरिति चेन्न परस्पराश्रयप्रसङ्गात् संख्यावत्तया प्रतीतेर्भ्रान्तित्वे गुणलक्षणसिद्धिः तत्सिद्धौ च बाधेन भ्रान्तित्वस्यापत्तं । नच हेत्वन्तरा रूपादेर्गुणत्वसिद्धौ बाधकसिद्धिः दृष्टान्तस्यापि संख्यायोगिप्रत्ययाक्रान्तत्वेन प्रसक्तद्रव्यकोटिप्रवेशतया गुणत्वेनासिद्धेः । संख्यायाः संख्यावत्त्वेनानवस्थाप्रसङ्गान्निःसंख्यत्वव्यवस्थितौ दृष्टान्तत्वं सम्भविष्यतीति चेन्न पृथक्त्वेनापि तस्याः सम्भावितद्रव्यकोटिप्रवेशत्वात् एवं पृथक्त्वस्यापि संख्यावत्त्वेति जातीतरानाश्रयोऽकर्म्मरूपोगुणइत्यपि न जातिव्यापकत्वात् जातिसामान्याश्रयइत्येवार्थइति चेन्न अभावाश्रयतया सर्व्वाव्यापनात् । जातिमात्रभावाश्रयइति

चेन्न उपाधीनामपि तदापतित्वात् नोपाधीनामाश्रययोरूपादिः किन्तु कथमपि सम्बन्धी तावतैवानुमानादिप्रवृत्तिरिति चेन्न उपाधिसम्बन्धं प्रत्याश्रयत्वस्य मन्नव्यत्वात् अन्यथा यदि किञ्चिद्रूपमत्र नेष्यते तदा सामान्यविशेषानुमानं तव न स्यात्। व्यधिकरणयोर्गम्यगमकभावानभ्युपगमात् तस्माद्यदेतदेव लक्षणं तत्तावन्न जातिरूपं तदिदं रूपं यदि रूपादौ नास्ति तदानीमस्ति यद्यस्ति तदा नास्तीति विचित्रेण लग लगेत्युक्ते न लगति मालगेत्युक्ते च लगतीति प्रवह्लिकामनुकरोति। अपि च गुणाश्रय इत्यत्र कश्चाश्रयार्थः समवायीति चेन्न गुणत्वादेरपि द्रव्यत्वप्रसङ्गात् गुणावच्छिन्नस्य समवायस्य गुणत्वेऽपि विश्रान्तत्वात्। गुणः समवेतो यत्र स गुणसमवायीति विवक्षितमिति चेन्न यत्रेत्यस्याधिकरणार्थस्याद्याप्यनिरूपणेन तेनैव तदाकारानुपपत्तेः। इहेति प्रत्ययहेतुराधार इति चेन्न इह शङ्खे पीतिमेति प्रत्ययाच्छङ्खस्य पीतगुणाधिकरणत्वप्रसङ्गात्। भ्रान्तिरसौ यथार्थस्य प्रत्ययोऽत्र विवक्षित इति

चेन्न तद्धर्मासत्त्वनिरूपणव्यतिरेकेण तदप्र-
मायत्वस्य वोद्धुमशक्यत्वात् न वाद्यापीहेति
प्रत्ययस्यार्थः प्रतीतो यत्प्रतियोगिकमसत्त्वं तत्र
निरूप्यते पीतत्वं प्रतियोगि तच्च क्वचित्सिद्ध-
मेवेति चेन्न तस्य प्रमितत्वादेवासत्त्वानुपपत्तेः।
तत्र न तस्य प्रमितत्वमिति चेन्न तत्रेत्याधार-
स्यानिरूपणादिति। एतेन समवायिकारणं
द्रव्यमित्यपि लक्षणं निरस्तम्। कथं निर्णेत-
व्यमिदं समवायिकारणमिदं नेति रूपादौ घ-
टादौ च संख्यासमवायिकारणत्वमुक्तेस्तुल्यत्वात्
संख्यैव रूपादौ नास्तीति चेत् घटादौ कथमस्ति
प्रत्ययस्योभयत्रापि तुल्यत्वादित्युक्तमनुसन्धानी-
यम्। द्रव्य एव संख्यास्वीकारे तत्सम्बन्धात्
गुणेऽपि तद्व्यवहारोपपत्तौ कल्पनालाघवात्
गुणे संख्याद्यस्वीकार इति चेत् विपरीतमेव
कुतो न स्यात् सत्तासामान्याद्यपि गुणादौ
किमर्थमङ्गीक्रियते द्रव्यद्वारैव तत्र व्यवहारो-
पपत्तेः। ननु सामान्यार्थ एव कः तथाहि अनु-
वृत्तप्रत्ययकारणं सामान्यमिति न लक्षणं
सामग्र्याः सर्वकार्योत्पत्तेः तया तदेकदेशा-

न्तरैश्च व्यभिचारात्। असाधारणविशेषणा-
दनन्यजातीयप्रयोजकत्वञ्च तदिति चेन्न स्वसा-
मग्रामपि प्रसङ्गतादवस्थ्यात् भेदप्रतिपत्त्यादा-
वपि प्रयोजकत्वाच्च। एतत्प्रतिपत्तिप्रमाणक-
त्वमिति चेन्न स्वसामग्रामंयस्याः प्रमाणत्वात्।
एतदेक प्रमाणकत्वमिति चेन्न अर्थ क्रियाभेदा
देरपि तत्प्रमाणत्वात् एतत्प्रमाकत्वमिति चेन्न
तद्विशिष्टस्यापि तत्त्वप्रसङ्गात्। तदवच्छिन्नप्र-
मांशप्रमाकत्वमिति चेन्न तदसिद्धौवासिद्धेः।
इयं प्रतिपत्तिर्येन विना नोपपद्यते तत्तत्त्वमिति
चेन्न कारणान्तराणामपि तथात्वादिति। अनु-
वृत्तं सामान्यमित्यप्यलक्षणम् किमिदमनुवृत्त-
त्वम् अनेकाश्रितत्वमिति चेन्न अवयविना संयो-
गादिभिश्च व्यभिचारात् नित्यत्वे सतीति चेन्न
समवायेन व्यभिचारात् अतएव न बहुवृत्ति-
त्वमित्यपि। असम्बन्धत्वे सतीति चेन्न अणु-
भिर्व्यभिचारादिति। नित्यत्वे सत्यनेकसमवेतं
सामान्यमिति चेन्न विकल्पासहत्वात्। एत-
ल्लक्षणं नित्यमनित्यं वा स्यात्। नाद्यः स्वात्मनि
वृत्तिविरोधात् विशिष्टप्रविष्टमपि हि नित्यत्वं

नित्यमेव। नापि द्वितीयः सामान्यस्य समवायस्य च नित्यत्वाभावप्रसङ्गात्। आत्मत्वादौ व्यक्त्यभावापन्नस्यापि विशिष्टाभावस्यासम्भवात् तस्य कदाचिदसत्त्वानङ्गीकारे तदनित्यत्वस्य वक्तुमशक्यत्वात् तद्ग्राहिणश्च प्रत्ययस्यैककालिकस्य मिथ्यात्वे अविशेषात् सर्व्वकालिकस्य मिथ्यात्वप्रसङ्गेन सर्व्वथा तदसत्त्वापत्तेः। एकस्य च सत्यत्वे अविशेषात् सर्व्वसत्यतायां कदाचिदपि तदसत्त्वं नास्तीति। एकदा तत्सम्बन्धेनोपलक्षितस्यान्यदापि विद्यमानत्वात् तथात्वमिति चेन्न न तादृशोपलक्ष्यासम्भवात् व्यक्तीनां भेदादित्यनित्यत्वानुपपत्तिरिति एतेन नित्यत्वमन्यत्रापि प्रतिवचनीयमिति। के चानेन लक्षणेन व्यवच्छिद्यन्ते। विशेषादय इति चेत् विशेषाएव केऽभिधीयन्ते तत्र नित्येष्वेव द्रव्येष्वेव वर्त्तन्तएव ये ते विशेषा इत्यलक्षणम् आत्मत्वादिना व्यभिचारात् नित्यान्तरे असत्त्वान्न तत्सर्व्वत्र नित्ये वर्त्तते विशेषास्तु नैवं वर्त्तन्तएवेति नियमादिति चेन्न प्रतिविशेषमव्याप्त्या-लक्षणत्वात्। यज्जातीयएवमिति लक्षणार्थइति

चेन्न जातेरनङ्गीकारात्। जातीयेत्यस्यात्यद्राद्युपाधिरेव तथा विवक्षितइति चेन्न तस्येतरव्यावृत्तस्यावगतो व्यर्थमिदं तदुपयोविलक्षणं अतएव विजातीयव्यावृत्तिप्रतीतेः इतरव्यावृत्तस्य वानधिगतौ लक्षणस्य दुरवधारणत्वापत्तेः इतरव्यावृत्ततया तज्जातीयत्वस्याप्रतीतेः। भवतु सएवोपाधिर्लक्षणमिति चेन्न तस्यानिरुक्तेः यतोद्रव्यनित्यव्यक्तिषु विन्वव्यावृत्तधीर्योगिनां सविशेषइति चेन्न स्वरूपधर्म्मव्यक्तिभेदेष्वपि प्रसङ्गात् अन्यथा कार्य्यद्रव्यगुणादिव्यक्तिषु सा तेषां कुतः स्यात् तास्विव वैधर्म्यान्तरस्य नित्येष्वपि सम्भवात् विशेषवत्त्वस्यावेन लक्षणासिद्धिरिति। अपि च विशेषादिभ्योविशेषणलक्षणादेर्भेदात्कथं तत्र तत्रैव तैर्विशेषादिव्यवहारः क्रियतां नान्यत्र। सम्बन्धोनियामकइति चेन्न सम्बन्धस्यापि सम्बन्धान्तरेण नियामकत्वेऽनवस्थापातात् अन्यथात्वनियमात् तदनिरुक्तेस्य तथाहि कः सम्बन्धशब्दार्थः समवायादयइति चेत् सत्यं किन्तु केन निमित्तेनेति हि गम्यवाक्यतात्पर्य्यं प्रतिस्वं व्यावृत्तेन संयोगत्वादिनान्येन वा।

विशेष्यञ्चेदं यद्विशिष्टनामकं तत्त्वान्तरं यद्गतं धर्मं गृह्णातीति। अथोच्यते यद्गतधर्मं गृह्णातीत्येतावन्मात्रमेव विवक्षितं गृह्णातत्येवेति वा। आद्ये दण्डस्यापि विशेष्यत्वापातः तद्गतस्यापि सत्त्वादेर्धर्मस्य ग्रहणात्। नापरः सम्भवति हि व्यभिचारिणो धूमस्याविच्छिन्नमूलत्वादिविशेषणं तद्विशिष्टञ्च तत्त्वान्तरं नच विशेष्यस्य धर्मं व्यभिचारितां गृह्णाति। अयोग्रीवितगतिविशिष्टस्याविच्छिन्न मूलता विशेषणं नच तथाभूतस्य व्यभिचारिता धर्म इत्युच्यते। नैवम्। प्रथमविशिष्टः किं व्यभिचारी न वा आद्ये स एव दोषः द्वितीये विशेषणान्तरान्तर्भाववैयर्थ्यं प्रथमविशिष्ट एव च तद्दोषावसरः। अथ यद्धर्मविशिष्टस्य तद्विशेषणं तद्धर्मं गृह्णाति न सर्वं नच व्यभिचारिताविशिष्टस्य तानि विशेषणानीति चेन्न तत् किं धूममात्रं न व्यभिचारि ततश्च व्यभिचारिताविशिष्टस्यैव तस्य तानि। तथा भवतु व्यभिचारिताविशिष्टस्य तद्विशेषणं परं सा न विशेष्यकोटिरिति चेन्न अत्रापि विशेष्या-

ज्ञानात्। किञ्च तद्विशेषणमिति तत्सम्बन्धि-मात्रं वा विशेषणतया वा सम्बन्धि। आद्येऽति-प्रसङ्गः द्वितीये तु तथैवान्योन्याश्रयादि किञ्च विशेष्यत्वलक्षणो यस्तद्गतोधर्म्मस्तं गृह्णाति न वा आद्ये अतिव्याप्तिः द्वितीये गृह्णात्येवेति नियमोऽसिद्धः। किञ्च मत्समवायो ज्ञानस्येत्यत्र भवति मत्समवायस्य ज्ञानं विशेषणं सम्बन्ध-मन्तरेणैव नच विषयः। नच गुणगुण्यादि-विशेषणविशेष्यभावे यः सम्बन्धान्तरमन्तरे-णेत्युक्त्वा व्यवच्छेद्यतां नीतः स एवायं समवाय इति कथं न व्यवच्छेद्यतां प्रतिपत्स्यते यतोऽत्र तस्यैव विशेषणविशेष्यभावादन्तरत्वासिद्धि-रिति तस्मात् सम्बन्धमन्तरेण ज्ञानं विशेषणं यस्येत्युक्तं तत्र ज्ञानं सम्बन्धमनपेक्ष्य स्वभावत एव यथार्थस्य विशेषणं तथा समवायस्यापीति न कश्चिद्विशेष इति साधूक्तं मत्समवायो ज्ञान-स्येत्यत्र ज्ञानविषयता समवायस्य स्यादिति। नच तत्र स एव समवायः सम्बन्धः अत्रापि विशेषणविशेष्यस्यैव सम्बन्धत्वात्। नासौ सम्ब-न्धिनोऽन्यत्वादस्य व्यवच्छेद्य इति येन सम-

वायेऽपि तुल्यत्वात् संयोगसमवायौ व्यवच्छिद्येते इति चेन्न तथापि ज्ञानाभावेऽपि प्रसङ्गात्। न तत्र ज्ञानं विशेषणं किन्तूपलक्षणमिति चेन्न अतीतानागतयोरविषयत्वापत्तेः। भावे चिन्त्येयमिति चेन्न अभावस्य विषयत्वाघातात् ज्ञानादन्यज्ज्ञानीयञ्च यत्कारणादि तत्रापि प्रसङ्गादिति किं विस्तरेण।

न च ज्ञानकारतायां गोचरस्य नास्त्येव ज्ञानगोचरयोर्भेदः प्रतीतिविरोधात् भेदमनिच्छता च स प्रतिषेद्धुमप्यनर्हइति। वक्तव्यस्तर्हि कोऽसौ भेदोनाम। स हि स्वरूपं वा स्यात् इतरेतराभावो वा धर्मान्तरं वा। नाद्यः भिन्ने अभिन्नभ्रमानुपपत्तिप्रसङ्गात् भ्रान्त्यापि धर्मिस्वरूपावगाहनात्। अन्यथा कस्याभेदं सा भ्रान्तिरुल्लिखेत्। ननु निःसम्बन्धित्वेन व्यवस्थिते तद्दारुप्रभृतौ नानाधारोऽन्य एवावयव्यारोप्यते येषु त्वारोप्यते ते भेदेनैव भान्ति किन्त्वनारब्धावयविषु तेष्वारब्धावयवितया विभ्रम्यते। नैवम् तेषामनुदाहरणीभूतत्वात्। अतस्मिन् स एवायमिति प्रत्य-

भिन्नाभासाद्यर्थानां दृष्टान्तत्वेनेष्टत्वात् तत्रापि धर्मान्तरारोपाभ्युपगमे तादात्म्याभावस्य संसर्गाभावप्रवेशापत्तेः। न चैवमप्येष्टव्यमेव तथापि स्वरूपभेदग्रहे तत्राभेदस्य धर्मस्याप्यशक्यारोपत्वात्। नापि द्वितीयः प्रतीतावन्योन्याश्रयप्रसङ्गात्। प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिः अधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्च तद्ग्रहणकारणमतः केतरेतराश्रय इति चेत् मैवम् एवं हि सति कुम्भः पटो न भवतीत्यत्र यथैव तस्याभावस्य प्रतियोगितया पटोनिषिध्यते तथा कुम्भोऽपीति सोऽपि कुम्भात्मतया निषिद्धः प्रसज्यते वस्तुतोऽन्योन्याभावस्य कुम्भप्रतियोगित्वेऽपि कुम्भस्यापटत्वनिरूपणकाले कुम्भस्य प्रतियोगिता नापेक्ष्यते किन्त्वाश्रयतैवेति कुम्भाप्रतिक्षेपः। पटस्य तु प्रतियोगितैवापेक्ष्यते नत्वाश्रयतेति कुम्भवत् पटस्यापि न संग्रहापत्तिः। यद्यप्यन्योन्याभावस्योभयप्रतियोगिता तथाप्यन्या कुम्भाश्रयता अन्या पटाश्रयता अन्या कुम्भप्रतियोगिता अन्या प्र-

प्रतियोगिता तेनान्योन्याभावस्योभयप्रतियोगि-
कत्वे चोभयाश्रितत्वे च नोभयोरपि संग्रह-
प्रतिक्षेपविरोधापत्तिः। नापि च प्रतियोगि-
त्वस्यानुयोगिनोभेदोपजीवनेऽन्योन्याश्रयानुपजी-
वने च स्वस्मादपि भेदग्रहापत्तिः प्रसज्येत।
यतः स्मर्य्यमाणस्य प्रतियोगिता अनुभूयमानस्य
चाश्रयतेति एतावन्मात्र एवोक्ते स्वस्मादपि
भेदग्रहानापत्तिः। न चैवं स एवायमित्यत्रापि
भेदग्रहप्रसङ्गः वास्तवतत्त्वासत्त्वाभ्यां विशेषा-
दिति। नैवं तथा हि किमधिकरण प्रतीति
रधिकरणतया प्रतीतिः उत वस्तुगत्या अधि-
करणस्य स्वरूपेण सा विवक्षिता। आद्ये किं
मायाधिकरणतया घटादेः प्रतीतिस्तस्य कारणं
न तावन्योन्याभावाधिकरणतया दण्डाप्रतीतौ
दण्डाधिकरणतया इव तदप्रतीतौ तदधिक-
रणतया प्रत्येतुं पूर्व्वमशक्यत्वात् विशिष्टप्र-
तीत्या विशेषणस्यावश्योल्लेख्यत्वात् विशिष्टस्य च
विशेषणमूर्त्तित्वात्। नापि यस्य कस्यचिदधि-
करणतया प्रतीतिस्तत् कारणं यत्र भिन्ने
अभेदभ्रमस्तत्र धर्म्मिणः सत्याद्याधारतया

प्रतीतावपि तदनुत्पत्तेः। न तन्मात्रात्तदुत्पत्तिः अपि तु प्रतियोगिस्मृति सहिताद् सा च तदा नास्तीति तदनुत्पत्तिरिति चेन्न प्रतियोगिस्मृतिरपि किं प्रतियोगितया स्मृतिः उत वस्तुगत्या प्रतियोगिनः स्वरूपेणेति विकल्पग्रस्त्वात्। आद्ये किमन्योन्याभावप्रतियोगितया यस्य कस्यचित् प्रतियोगितया वा। नाद्यः अन्योन्याभावाप्रतीतौ तदनुपपत्तेः पूर्ववत्। नापि द्वितीयः तस्य वस्तुगत्या भिन्नस्याभिन्नतया भ्रमविषयी कृतस्य स्वदेशेतरदेशादावसत्त्वेन प्रतीयमानत्वे स्वाभावप्रतियोगितया प्रतीतावन्योन्याभावप्रतीत्यनुत्पत्तेः। प्रतियोग्यनुभूतिः सा न स्मृतिरिति चेन्न स्मृतित्वस्याप्रयोजकत्वात् अन्यथानुभूयमानयोरन्योन्याभावाप्रतीति प्रसङ्गात्। अनान्तरा स्मृतिकल्पनया नान्योन्यात्मानाविमाविमावित्यनुभवबाधितया प्रयोजकत्वेऽपि वा स्मृतित्वस्य योऽसौ तत्र नासीत् सोऽयमिति स्मर्य्यमाणाभावप्रतियोगिकत्वेऽपि वस्तुगत्या भिन्नस्याभिन्नतया भ्रमेणोल्लिख्यमानस्यान्योन्याभावप्रतीत्युदयात्। सोऽयमभा

योऽपि हेतुः स भ्रमोदाहरणे नास्तीति चेन्न पूर्व्वदृष्टे स्मृतिनता ततो वस्तुगत्वान्यथैवानन्तरदृष्टस्य पूर्व्वदृष्टत्वात् भिन्नमभिन्नं वेति अनिरूपितस्यापि सम्भवेन तत्रेतरेतराभाववुद्ध्यापत्तेः। वुध्यतएवेति चेन्न पश्चात्तत्र संशयस्य दर्शनात् विशेषयोरपि तत्र हेतुरिति चेन्न विशेषत्वस्यान्योन्याभावनिरूपणं विना दुर्निरूपत्वात्। एतेन वस्तुगत्या प्रतियोगिनः स्वरूपेण स्मृतिः सहकारिणीत्यपि व्युदस्तम् वस्तुगत्याधिकरणस्य स्वरूपेण प्रतीतिरित्यपि भिन्नस्याभिन्नतया प्रतीयमानस्यान्योन्याभाववत्तया ग्रहणप्रसङ्गात्। नापि तृतीयः अभावस्य निर्द्धर्म्मकतापत्ते तस्य विम्बाभिन्नत्वप्रसक्तौ विम्बस्यात्मभावरूपत्वेन निर्द्धर्म्मकतया धर्म्मलक्षणान्योन्याभावविरहिण ऐकरूप्यापत्तेः अभावे धर्माभावात्। स्वरूपमेव भेद इति चेत् योऽसौ भेदस्तस्य स्वात्मा स किं कस्मादपि भेदः उत निष्प्रतियोगिक एव न तावन्निष्प्रतियोगिक एव प्रमाणाभावेनासत्त्वप्रसङ्गात्। योऽसौ भेदव्यवहारोऽस्ति स कस्मादपि न नील-

भावः केन समभिव्याहारात् घटत्वस्यापि विघटितत्वे तथैव धर्मं प्रतीत्यापत्तेः। तद्धर्मस्य तथात्वमिति चेन्न तथा हि न द्वितीयः स एव सापेक्षप्रतिपत्तिर्भेदो न तु घटत्वादिः। घटत्वादेश्च स भेदः स्यात् तद्धर्मकत्वात् घटादेस्तु भेदपर्य्यनुयोगे तदभिधानमसङ्गतं कथञ्च भिन्नैरनुगतव्यवहारः स्यात्। तथापि तथा सति वा किन्न तैरेव सदादिव्यवहारः स्यात्। नापि द्वितीयः अनभ्युपगमात् सप्तपदार्थानमन्तर्भावप्रसङ्गत्वात् स्वात्मनोऽवृत्तरवृत्तिभ्यामनुपपत्तेश्च दृष्टयाञ्चोपाध्यालीढवैचित्र्याणां जात्या समर्थने सर्वोपाध्युपधानानां जात्यैव समर्थनं स्यात्। ननु घटत्वादय एव भेदा घटत्वादिज्ञानविशेषेऽपि च प्रतियोगिज्ञानसहकारिवशादिचित्रव्यवहारोपपत्तिरिति न व्यवहारसत्यत्वार्थं वास्तवानुगतविशेषस्यावश्यस्वीकर्त्तव्यत्वे तथैव पर्य्यनुयोगानुवृत्तेः। अनन्तभेदपरम्पराभ्युपगमे तत्क्रमकल्पनाया प्रतीत्यपर्य्यवसानात्। तद्युगपत्कल्पनायाममनन्तसमूहतया कस्यचिदन्यभेदस्यानवधीकृतस्यापि

ग्रहणसम्भवादिना सर्व्वत्र प्रामाण्यानाश्वास-प्रसङ्गात् सर्व्वप्रतीति नियमानङ्गीकारे चाप्रतीतसत्त्वे प्रमाणाभावात्। जिज्ञासायां तस्य तस्यापि ज्ञेयत्वे तद्बुद्धीनां भेदबुद्धित्वात्तदर्थेष्वनुतत्वस्याप्यनुपपत्त्या तेष्वैकजात्याद्यभ्युपगमे तद्भेदेऽपि तदङ्गीकारे परस्पराश्रयाश्रयिभावप्रसङ्गात्। एवं सत्तादीनामानन्त्यस्वीकारे द्रष्टव्यम्। किञ्च घटत्वादे र्भेदत्वेऽवधिभूतपटत्वादिसापेक्षप्रतिपत्तिकतायां घटत्ववत् पटत्वस्यापि भेदरूपस्य भेदावधिप्रतिपत्तिसापेक्षतयाऽवधेश्च घटत्वादित्वेन घटत्वादिप्रतीत्यपेक्षायामन्योन्याश्रयत्वप्रसङ्गः। भेदरूपत्वे घटत्वादेरवध्यपेक्षा न तु स्वरूपमात्रप्रतिपत्तौ स्वरूपमात्रेण चावभित्वं तत् कृत एवमिति चेन्न भेदरूपता यदि तस्य स्वात्मैव तदा स्वरूपमात्रप्रतिपत्तौ नावध्यपेक्षेति शून्यञ्च वचनम्। अथ धर्मान्तरं तदा स एव भेदोऽस्तु कृतं तद्वत्तया घटत्वादेर्भेदरूपतेति प्रक्रियाकल्पनया। अस्तु स एव धर्मान्तरं भेद इति चेन्न रूप्यत्वात्। अथापि स्वरूपादिवत्

मिदं भेद इति कथं सङ्गच्छते तद्व्यवहारस्यैका कारस्य नानानिमित्तत्वे गोत्वाद्यनुगताकार-प्रतीतेऽपि कथमेकनिमित्तसिद्धौ प्रामाण्यं व्यभिचारात्। सामान्यविशेषैरेव परसामान्य-बुद्धिव्यवहारोपपत्तौ तत्कल्पनानुपपत्तेः। किञ्च भेदे भेदान्तरमस्ति न वा आद्येऽन-वस्था द्वितीये तदभाव एव स्यात् धर्मिण्येव तत्प्रवेशात्। भेदस्वभावत्वात् स्वात्मन्येऽपि स्वयमेव तद्व्यवहारमयं करोति सत्तेव तद्व्य-वहारमिति चेन्न यदि स्वस्मादभिन्नः स्वभेद इति च स्वस्मादित्यवधेयावधिभावस्वरूपः स्वयं भेदो ऽन्यस्माच्च स्वस्य तदास्य भेदस्य स्वात्मप्रतियोगि-त्वेन स्वाश्रयत्वेन चाङ्गीकारे स्वस्मादपि स्वयं भिन्नः किं नाङ्गीक्रियते विरोधाभावात्। स्वी-क्रियेताप्येवं यदि तथा प्रतीतिर्व्यवहारो वा स्यादिति चेन्न अस्त्यपि शब्दाभासादेस्तथा प्रतीतिराभासशब्दव्यवहारश्च। सत्यौ प्रतीति व्यवहारौ स्वीकारकारणं न च तौ स्वात्मन एव स्वस्माद्भेदविषयौ स्त इति चेन्न स्वात्मा स्वस्यै-वाधिकरणमवधिश्चेत्यपि तर्हि न सत्या

सम्भवति मया व्यवहारसत्यत्वमित्यमङ्गीकुरुषे। न वयं स्वात्मा स्वाधिकरणं स्वार्थविवेत्यभ्युपगच्छामः किन्तु धर्मान्तरे तत्प्रतियोगिके तदाधारे वा स्वीकृते यौ बुद्धिव्यवहारावुपपद्येते तावनवस्थाभयाद्धर्मान्तरमन्तरेणैव स्वभावाद्भेदः करोतीति ब्रूम इति चेत् तर्ह्यन्यत्र यादृशी प्रतीतिर्धर्मान्तरविषया तादृश्येवात्र विना धर्मान्तरमुत्पद्यत इति भ्रान्ता स्यात्। यस्य च स्वभावस्य बलेनेदृशी सा जायते स दोषः स्यात् यथा सत्यरजते रजतप्रतीतिरजतत्वादुत्पन्ना अन्यत्र विना रजतत्वं जायमाना भ्रान्ता सा भवति। यस्य च सामर्थ्यात् सा तादृशी जायते स दोष इत्युच्यते तत्र रजतत्वं नास्ति अत्र धर्मिस्वरूपोऽपि भेद एव सन्नवलम्बनमिति चेत्। नैवम्। भिन्नप्रतीतिर्विशिष्टविषया भेदतदाश्रयरूपोभयवस्तुविषयात्मिका यादृशी सर्वाङ्गीकृता ततो मात्रयाप्यन्यूनाधीया इह जायमाना इयं विषयं नाङ्गीकुरुषे तदा भवतापि भ्रान्तत्वं दुर्वारम्। अथाङ्गीकुरुषे तदाऽनवस्थाप्रसङ्गः।

अथ तदुभयविषयव्यतिरेकिणैव सैव सत्त्वा अन्यत्र तर्हि तेऽन्यादृग्विषया मिथ्या स्यादित्यलं पल्लवेन ।

यत्तु सत्त्वेत्युक्तं तत् कटककणवोदाहरणमनुहरति यतः सत्ताप्यमुना दूषणेनास्माभिः खण्डनीया । यत्पुनरभिधीयते किमेतैर्भेदखण्डनवादिभिरभिहितं भवति किं भेदज्ञानमेव नास्ति सदपि चानित्यम् अनित्यमपि वा निर्हेतुकं सहेतुकमपि वा निर्विषयं सविषयमपि वा बाध्यमानविषयम् । तत्र प्रथमः सर्व्वतोविरोधादनुत्तरः । द्वितीयः सुषुप्तस्यानुरोधादुपेक्षणीयः । तृतीयोविरोधाद्धेयः । चतुर्थस्तु भेदोल्लेखादेवत्याज्यः । पञ्चममधिकृत्य ते किमेतेष्वन्यतमो विषयः तदन्यो वा द्वितीये किमेताभिर्व्विकल्पानुपपत्तिभिस्तस्य बाध्यते एवं हि चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः । अथान्यतमात्मा तत्रापि यदि धर्मान्तरमेवेति तत्तु तद्गानवस्थाभिया तदधिकः प्रत्राकृस्त्यज्यतां तत्र कुतस्त्यागः नह्यनवस्थाप्रतिभासमानत्वं किन्तर्वेति किन्तु प्रमाणं

परिहारयति गन्धे गन्धान्तरमिव । अथेतरे-तराभावमेव भेदज्ञानमालम्बते तदापि का-त्माश्रयः तेन हि भेदज्ञानमेव न स्यात् । अस्ति च तत्ततो हेत्वन्तरमाक्षिपेत् न तु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्त्तेत अविद्यावशादिति चेत् किञ्चातः नह्यविद्येत्येवात्माश्रयनिवृत्तिः तथा सति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः । अथात्माश्रयदोषकृततया तन्न तस्यैव कारणं यतो यतः कुतश्चित्तस्य जन्म तच्च दुर्निरूपमतोऽविद्येत्युच्यत इति वि-चारार्थः । नास्ति तर्हि विवादः न च तदपि दुर्निरूपं प्रतियोगित्वेनाप्रतीतावधिकरणस्वभाव-त्वेनाधिकरणप्रतीतिः अधिकरणस्वभावत्वेना-स्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहण-कारणमिति निरूपणात् । अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तन्न तथापि सह-प्रयोग एवानुपपन्नः परिहीयतां भेदेन तु किमपराद्धम् सोऽपि दृश्यत इति चेत् सत्यं नैमित्तिकस्तु स्यात् न स्वरूपतः न हि घट-मानय पटमवलोकयेत्यादौ भेदपदमपि प्रेक्षा-

वानुपादत्वे भावान्तरत्वे तु मूढप्रबोधनार्थं घटः कुम्भ इति वत् सहप्रयोगेऽपि न दोषः तथापि कः परमार्थः। यथायथं त्वयमपि घटस्य हि घटाद्यात्मना प्रतीतिः अपटाद्यात्मना च प्रतीतिस्ततो वैशिष्ट्यप्रतीतिश्चेत्यनुभवसिद्धम्। तत्राभावस्य प्रथममभावम् अभावान्तरधर्मान्तराभावात् सामान्यादिषु त्रिषु द्वयं धर्मान्तराभावात् द्रव्यादित्रिषु त्रयं त्रयस्यापि सम्भवात्। भवति हि पटोऽयं न घटः तन्तुमयश्चेति गन्धोऽयं न रूपं सुरभिश्चेति गतिरियं नोत्क्षेपणं तिर्यक् चेति। लक्षणन्तु स्वरूपभेदस्य नाद्रूप्येणाप्रतीतौ प्रतीतिः इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः वैधर्म्यस्य तु विरोधः सचैकधर्मसमावेश इत्येपा दिगिति। अत्रोच्यते तथा हि यत्तावदुक्तं किमेतेष्वन्यतमात्मास्य विषयः तदन्यो वेति तन्निर्वचनवादिनि शोभते नास्मासु प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षान्तर्भावान्तर्भावाभ्यां वा तदन्यतमाभ्यां वा अन्येनापि धर्मेण येन केनचिन्निरूप्यमाणोऽन्वये व्यतिरेके च

वाच्यतामेति तेन सर्वमनिर्वचनीय इति ब्रूमः । एतच्च न केवलं भेदस्यापि तर्हि जगत एव अनिर्वचनीयवादस्यायं यथा तथोदितं प्राक् यदप्युक्तमथान्यतमेत्यादि गन्धोगन्धान्तर-वदित्युक्तम् तदपि न साधु यथा युक्तैरस्वी-कारस्तथैव प्रवाहस्वीकारस्य दुर्व्वारत्वात् । तत्र यदि प्रवाहस्वीकारे तस्यासाधकत्वं स्वीक्रियते एकस्वीकारेऽपि स्यात् अविशिष्ट-लक्षणत्वात् अतएव प्रतिभासमानत्वादेकस्वी-कार इत्ययुक्तम् एकप्रतिभासिकाया युक्तेः सर्व-साधारण्यात् । न हि प्रत्यक्षादेव जायमानः प्रतिभासः प्रमाणं नानुमानादेरित्यत्र युक्ति-रभ्युपगमो वा न चानवस्थाप्रसञ्जिका युक्ति-रनुमानादेरन्या नाम तर्कस्यापि व्याप्तिमूलत्वं सर्व्वस्यानुमानच्छायामापद्य दूषणमपि प्रव-र्त्तत इति भवत एव व्युत्पादनात् यतोऽनवस्था-प्रसञ्जिकाया युक्तेर्दोषो वा गुणो वा त्यक्तव्यो वा स्वपक्षः । प्रवाहस्वीकारवदेकस्वीकारे ना-नवस्थेति चेत् तत् किमनवस्थाप्रसङ्गाभावविशि-ष्टायास्तस्या युक्तेः प्रामाण्यं मन्यसे यदि तर्हि

द्वितीयमात्रस्वीकारे नानवस्थेति द्वितीयस्वीकारप्रसङ्गः खोमितिचेत् परार्द्धपर्य्यन्तं प्रवाहस्वीकारं को वारयिता नैतावन्मात्रेण तुष्यति भवान् परार्द्धादप्यधिकमेकादिकं किं नाभ्युपगम्यत इत्यपि भवता वक्तव्यमेव तथा च सैवानवस्थेति चेत् सत्यं तस्मात्तु भवतः कीदृशमभ्युपगम्यतामिति निपुणं मन्त्रयामहे । द्व्यादिकं परित्यज्यतामिति चेत् एकस्मिन्नास कीदृशोऽनुग्रहः येनानवस्थाप्रवाहनिवेशाविशेषेऽपि द्व्यादिकमुपेक्षितमेकन्तु रक्षितम् । द्वितीयमादायानवस्थेति चेत् द्वितीयेऽपि यदि भवतोऽनुग्रहः स्यात् तृतीयमादायानवस्थेत्यभिधाय सोऽपि रक्षितः स्यात् तावेतौ च भवतो रागद्वेषौ निःश्रेयसाय यतमानस्य मानसमास्कन्दमानौ न कल्याणोदर्कौ तर्कयामि । गन्धे गन्धान्तरप्रसञ्जिका न च युक्तिरस्ति तदस्तित्वे वा का नो हानिः तस्याप्यस्माभिः खण्डनीयत्वात् । यदप्यथेतरेत्यादिनिरूपणादित्यन्तं तदप्ययुक्तम् तथा हि इतरेतराभावस्याम भेदव्यवहारहेतुं [illegible] तस्य पक्षोनोपपन्न

आत्माश्रयप्रसङ्गादित्येवं च बाधकं न किञ्चिद् बाधकमुक्तं स्यात् प्रतियोगिरूपत्वेनेत्यादि समाधानञ्च प्रागेव दूषितम् । अथ स्वरूपमेवेत्यादि न दोष इत्यन्तं यदुक्तं तच्चास्मादनुक्तदोषदूषणमित्युपेक्षितम् । यद्यपि तथापि क इत्यादि तिर्य्यक् चेत्यन्तं तदपि गर्त्तवार्त्तिगोधामांसविभजनमनुहरति पक्षत्रयस्याप्युक्तयुक्त्याच्छादितस्य दर्शयितुमशक्यत्वे न तद्विभागव्यवस्थितेरवसरनिरस्तत्वात् । यच्च स्वरूपभेदस्य लक्षणमुक्तं ताद्रूप्येणाप्रतीतौ प्रतीतिरिति तदप्यवद्यम् यदेकमेव वस्तु भ्रान्त्या भिन्नमिति प्रतीयते तत्र ताद्रूप्येणैकस्यैकरूपतया प्रतीतिर्नास्ति नास्ति च प्रतीतिर्न च स्वरूपभेद इत्यतिव्याप्तिः । ताद्रूप्येणेत्यस्य धर्मान्तरं रूपभेदासङ्कीर्णोदाहरणार्थत्वात् प्रतीतिरभ्रान्ता विवक्षितेति चेत् स्वरूपप्रतीतेस्तत्राप्यभ्रान्तत्वात् । यच्च स्वरूपमात्रेण प्रतीयते वस्तु न तत्ताद्रूप्येणैकरूप्येण न च नानात्मतया वस्तुगत्या चैकमेव तत् तत्रापि स्वरूपलक्षणभेदः स्यात् नास्त्येवेदृगुदाहरणं ताद्रूप्या-

वाद्रूप्याभ्यामेकस्यावश्यं प्रतीतिरिति चेन्न प्रतीतिकत्वक्षात्मकाभावात्। भवति हि यस्या तत्र दृष्टं तत् किमेकमनेकं वेत्यनुयुक्तो नायं विशेषोमया शङ्कितोजिज्ञासितो वा स्वरूपमात्रन्तु प्रतीत्याह मुदासीनोऽभूवमित्यभिधत्त इति। ननु तदपि स्वरूपं भेद एव कस्मादपि तत् कथमुक्तदोषावतता इति। नैवम्। एवं हि ताद्रूप्येणाप्रतीताविति व्यर्थं स्यात्। प्रतीतिमात्रं लक्षणं वक्तव्यं यत्प्रमेयं तत् कस्मादप्यवश्यं भिन्नमिति एकस्येव स्वस्माद्भेदप्रसङ्गनिराकरणार्थमपि ताद्रूप्येणाप्रतीतावित्युक्तं तच्च खण्डितमिति। ताद्रूप्यमन्यरूपत्वं विवक्षितमिति चेन्न तदा हि तदानुपस्थितपराभवत् अन्यथा स्वरूप भेदत्वे चात्माश्रयः सर्व्वस्वरूपाणां लक्ष्यत्वात् अन्योन्याभावत्वे चान्योन्याश्रयः भेदश्च चैकं यदपीतरेतराभावस्य लक्षणमबाधितः समानाधिकरणोनिषेधप्रत्ययः। एतदप्यशोभनं समानाधिकरण इत्यादि भाषायाः कथं कथमपि तात्पर्य्यगवेषणेऽपि समानाधिकरणोयोनिषेधस्तत्प्रत्यय-

विषयोऽन्योन्याभाव इति पर्य्यवसाने समाना-
धिकरण इति किं तुल्याश्रयः उतैकाश्रयः उत
तादात्म्यप्रतियोगिकः उताधिकरणभूतपदार्थ-
वाचिशब्दविशेष्यभावव्यवस्थितपदाभिधेयः उ-
तान्यदेव । तत्र न प्रथमः तुहिनमयूखे प्रिया-
मुखे च न दूषणकरणस्यापि सम्भव इति
प्रत्ययस्यापि दर्शनात् । तत्र मुखचन्द्रयोरन्यो-
न्याभावोऽस्तीति चेन्न तस्य सत्त्वेऽप्युक्तप्रत्ययस्य
तदविषयत्वात् मास्तु तद्विषयो लक्षणान्वयस्तै
तच्च तदविषयत्वेऽप्यदुष्टमिति चेत् कीदृशं
तर्हीदं लक्षणं न तावत्समानाधिकरणयो नि-
षेधस्तत्प्रत्ययोयस्तस्य यो विषयः सोऽन्योन्या-
भाव इति नापि स एवाऽन्योन्याभाव इति नापि
यत्र समानाधिकरणेनिषेधप्रत्ययस्तत्र योऽस्ति
सोऽन्योन्याभाव इत्यस्तु तद्धर्म्मस्य सर्व्वस्यान्यो-
न्याभावत्वापातात् समानाधिकरण वैयर्थ्य-
प्रसङ्गाच्च । एतेनैकमुदाहरणमादाय द्विती-
योऽपि निरस्तः । नापि तृतीयः तादात्म्यप्रति-
सम्बन्धव्यतिरेकेण तत्प्रतियोगिकत्वस्य प्रत्येतु-
मशक्यतया तन्निर्व्वचनप्रसङ्गात् तच्चाशक्यं तथा

क्ति तदेकत्वं वा भेदाभावो वा स्वरूपम्ब्यसम्भा-
वितं तस्य भेदत्वोपगमात् तस्मिन् दृष्टेऽपि तत्र
वेति तादात्म्यसंशयानवकाशापत्तेः। आद्येऽपि
संख्याविशेषो वा धर्मान्तरं वा। नाद्यः गुणादौ
तदभावप्रसङ्गात् प्रथमे क्षणे कार्य्यद्रव्यस्यैक-
स्यापि स्वातादात्म्यप्रसङ्गात्। 'वैशेषिकमत-
व्युत्थाने चैकत्वे तदभावप्रसङ्गात् उपाधिभि-
न्नावलम्बि च तादात्म्यं कथं स्वरूपमात्रावलम्बे-
नैकत्वीकर्त्तुं शक्यं विचित्रप्रतिपत्तिकत्वात्।
नापि द्वितीयः तस्यापि धर्मान्तरापेक्षयानव-
स्थापातात् अनपेक्षायां स्वादात्म्यप्रसङ्गात्।
नापि द्वितीयः न हि भेदस्याभावो भवन्नन्यो-
न्याभावस्यैव स्यात् अन्योन्याभावस्य च तत्
प्रतिक्षेपात्मकत्वात् तेनाप्यन्योन्याभावप्रति-
क्षेपात्मना भवितव्यं परस्परप्रतिक्षेपात्मत्वा-
न्निषेध्य निषेधयोः तथा च सत्यन्योन्याभाव-
प्रतीतिमन्तरेण तन्निरूपणाशक्यं निषेध्यप्र-
तीतिसापेक्षत्वान्निषेधबुद्धेरित्यन्योन्याश्रयः।
नापि तुरीयः निर्घटं भूतलमित्यत्रापि प्रस-
ङ्गात्। नापि पञ्चमः समानाधिकरण इति

प्रतियोगिसमानाधिकरणोऽविवक्षित स्तादृशस्य निषेधोऽन्योन्याभावः । तत्प्रत्ययस्य तल्लक्षणमित्यस्याप्ययुक्तत्वात् भावासमानाधिकरणस्यान्योन्याभावस्य कुम्भः पटत्वं न भवतीत्यादेरव्यापनात् तज्जातीय तथात्वञ्च यं विशेषमन्योन्याभावगतमादाय स्यात्तदेव लक्षणीभवन् समर्थमुपजीव्यमानमस्य लक्षणस्योपन्यासं प्रत्यादिशति । न च तदपि सम्भवत्यन्योन्याभावसंसर्गाभावभेदस्य खण्डनवक्ष्यामाणे निरस्तत्वात् प्रकारान्तरस्य चासम्भवात् । न च घटः पटत्वं न भवतीत्ययमेवाभावः पटत्वं पटो न भवतीत्येष एव प्रतियोग्यैक्येन मर्यादया तथाभ्युपगमादिति कश्चित् प्रतियोगिसमानदेशत्वादपि लक्षणसिद्धिरिति वाच्यं तथापि प्रतियोग्यैक्येन तदत्यन्ताभावैक्यापत्तेः तादात्म्यवत् योगस्यापि द्विष्टत्वाविशेषादतिव्याप्तेः कालभेदेन च प्रागभावादेरपि प्रतियोगिसमानाधिकरणतयातिव्याप्तिः कालैक्येन विशेषणे च तदन्योन्याव्यतिरेकाव्याप्तेरिति । यदपि धर्मान्तरस्य लक्षणत्वादि वैधर्म्यस्य तु विरोधः स चैकधर्मसमा-

वेद्य इति तदपूरदृष्टान्तमनसोभाषितम्। तथा हि प्रमाणमेययोर्भेदोऽस्ति न वा नचेत्तदभिधानपर्य्यायत्वप्रसङ्गः किं प्रामाणिका बुद्धिरित्यक्ते बुद्धिविषये नोत्तरप्रसङ्गश्च। नापि प्रथमः स हि न तावत्स्वरूपलक्षणः एकस्याप्युभयभावदर्शनात् अतएवान्योन्याभावोऽपि धर्मान्तरन्तु तयोर्भेदः परिशिष्यते तयोऽन्येन रूपेण तत्प्रमाणमन्येन च तदेव प्रमेयमित्युच्यते तथा च सत्येकधर्म्मसमावेशोलक्षणमव्यापकम् मेयं प्रमेया च तुलाप्रामाण्यवदिति प्रागस्मदीयमपि परामर्शं व्यस्तापीरित्यास्तां विस्तरः।

ननु भेदप्रतिपत्तेस्तावत्प्रत्यक्षफलस्यार्थेन्द्रियसन्निकर्षः कारणमसाधारणं वक्तव्यं यत्र चेन्द्रियसन्निकर्षस्य भेदप्रतिपत्तिहेतोर्द्वितीयः सम्बन्धः स एव भेदोऽस्तु न उक्तबाधकैर्बाधितायाः प्रतीतेरर्थसन्निकर्षकारणत्वाभावादिति। किं पुनस्तत्कारणत्वं पूर्व्वभावित्वमिति चेन्न चिरान्वयध्वस्तानामपि कारणत्वप्रसङ्गात्। अव्यवहितपूर्व्वभावित्व-

मिति चेन्न व्यापारस्यैव कारणत्वप्रसङ्गात्। व्यापारेण न व्यवधानमिति चेन्न कारणकारणस्यापि कारणत्वप्रसङ्गात्। कारणस्यातद्व्यापारत्वात् नैवमिति चेन्न विना विशेषोक्तिं दुर्व्विवेकत्वात् यद्विना यत् यं न जनयति तत् तस्यावान्तरव्यापार इति चेन्न सहकारिणामपि तथात्वप्रसङ्गात्। तज्जन्यमिति चेन्न तथापि कारणत्वाव्यवस्थितौ विशेषोक्तेरतिप्रसक्तेः कथमपि विशेषोक्तौ गगनादेः सर्व्वत्र कार्य्ये हेतुत्वप्रसङ्गात्। अनन्यथासिद्धपूर्व्वभावित्वमिति चेन्न वक्तव्यं हि कस्मादन्येन प्रकारेण विना का च सिद्धिरिति यदि हि कार्य्यादन्येन प्रकारेण न निष्पत्तिस्तदा असिद्धिः न हि कार्य्येण कारणं जन्यं नापि कार्य्यादन्येन प्रकारेण न ज्ञप्तिः प्रत्यक्षादेरपि कारणत्वज्ञप्तेः न खलु सर्व्वा कार्य्यलिङ्गजा कारणस्य ज्ञप्तिः नापि कारणत्वात् व्यतिरिक्तेन प्रकारेण न निष्पत्तिर्ज्ञप्तिर्वा प्रभावात्माश्रयात् प्रकारान्तरवत्तयापि च तदुपगमात्। अतिरिक्तात्मकारणत्वमिति चेन्न उक्तदोषा-

निवृत्तेः कारणत्वात् पूर्वं चोत्पत्तिमतोऽपेक्षणिकत्वादिभिरभ्युपगमात्। अथ यदि तत्पूर्वतया कदाचित्तदपि कारणमेवं तत्पूर्वतरमपि कस्याश्चित् व्यक्तेरनैवम्भावेऽपि तज्जातीयतया तथाभावित्वविवक्षिततया व्यक्तिव्यभिचाराप्रयोजकत्वादिति चेन्न कार्य्यान्तरेऽपि गगनादेस्तथाभावस्य विनिगन्तुमशक्यत्वात् कालदेशाव्यापकतयान्यथासिद्धस्येति तदिति चेन्न तथा सति शब्दादौ गगनादेरकारणत्वप्रसङ्गात् एतेनान्यथासिद्धान्वयव्यतिरेकानुविधायित्वमपि व्युदस्तम्। गगनादेर्व्यतिरेकाभावात् अकारणत्वप्रसङ्गस्याधिकः। व्यापारवत्त्वं कारणत्वमिति चेन्न तद्धि व्यापारसमवायित्वं वा व्यापारजनकत्वं वा। नाद्यः यागादेरकारणत्वप्रसङ्गात् नोत्तरस्तस्यैव निरूप्यमाणत्वात्। नित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिनिवारकत्वमिति चेन्न निवारकप्रदोषघटकस्य प्रत्ययस्य कारणत्वनिर्वचनं विना अनिरूप्यमाणार्थत्वात् अन्यतरापत्तेरेकस्य च निवर्त्यशक्तेः। सदनवस्थापक्षे तत्र तत्पूर्वभावत्वमपर-

समस्य कारणं तद्भावस्य कारणत्वमिति चेन्न भावस्य विनाशित्वानभ्युपगमे तथाप्रसङ्गेनाति-व्यापकत्वात्। तस्य स्थितत्वेन च विशेषणे सहभावनियतस्याभावेऽपि प्रसङ्गः तथात्वोप-गमे च तत्सामग्र्यामपि प्रसङ्गः। तस्या अपि च तथोपगमे कार्य्यद्वयैक्यप्रसङ्गोऽभावारण्यञ्च विशेषापेक्षित्वेऽतिव्याप्तिरविशेषे भाविपूर्व्वार्थ-विकल्पावकाशश्च। नियतप्राग्भावित्वमिति चेन्न अवश्यम्भावस्य नियमार्थत्वे गमनादेः सर्व्व-कार्य्यहेतुत्वप्रसङ्गस्य तदवस्थत्वात् अवयवरूपादेश्चावयवितद्रसादिषु कारणत्वप्रसङ्गात्। अनौपाधिकत्वं नियमार्थ इति चेत् एवं स्यानौ-पाधिकः पूर्व्वभावो हेतुत्वमित्युक्तं भवति तथा च पिपीलिकोत्थानादेर्वृष्ट्यादौ जनकत्वप्रसङ्गः। सहभाविसामग्र्या वा न प्राचि पूर्व्वभावो हि नियतः किन्तु दृष्टैः परभाव इति चेन्न प्राग्-रूपाणामेव नियतत्वात् तानि कारणमेवेति चेन्न निदानप्राग्रूपसाङ्कर्य्यप्रसङ्गात् पूर्वोक्तश्च वक्तव्यः। पूर्व्वकालसम्बन्धित्वं पूर्व्वत्वमिति चेन्न कालस्याकारणत्वप्रसङ्गात् तस्यापि किं

पूर्व्वत्वमिति विवेचनीयत्वात्। अतीतप्रागभावा-
च्छिन्नत्वं तस्य पूर्व्वत्वमिति चेन्न अतीत इति
निष्ठान्तस्य पूर्व्वकालवाचिनो विवेचनीयत्वात्।
परत्वापरत्वयोर्गुणयोर्मध्ये यत्परत्वं तत् पूर्व्व-
त्वमुच्यत इति चेन्न कालादौ गुणादौ च तद-
नङ्गीकारात् तेषामकारणत्वप्रसङ्गात् तस्मि-
न्नेव च तदभावात् साक्षात्कारिज्ञानादावपि
तस्याकारणत्वप्रसङ्गात्। सामग्र्येकदेशत्वं का-
रणत्वमिति चेन्न एकदेशत्वस्य अनिर्व्वचनीय-
त्वात् अवयवत्वप्रदेशत्वादीनां सामग्र्यामस-
म्भवात् सकलकारणकलापसमवधानस्यैव च
मेलकार्थत्वात् तेनैव तन्निर्व्वचनीयत्वात्। यद-
नन्तरं कार्य्यं भवत्येव सा सामग्रीति चेन्न वि-
भागानन्तरं संयोगनाशस्यावश्योत्पत्तेर्व्विभाग-
स्यापि सामग्रीत्वप्रसङ्गात्। एवं कर्म्मणो वि-
भागोऽन्त्यतन्तुसंयोगस्य पट इत्यादिकार्य्यका-
रणभावो नाम सम्बन्धः कोऽपीति चेत् तद-
निरूपणे कार्य्यकारणभावानुपपत्तेः। कार्य्य-
कारणविशेषितत्वात् भेदे तयोः पृथक् निर्व्वा-
च्यत्वात्। कारणत्वं धर्म्मः कोऽपीति चेन्न

तदभावे प्रमाणस्य वाच्यत्वात्। क्वचित्प्रत्यक्षः क्वचित् दृष्टानुमेय इति चेन्न किं हि प्रतिकारणता प्रत्यक्षमुल्लिखेत्। न तावदनिर्लुठितकार्य्यप्रतीतेः अन्वयव्यतिरेकादेर्व्यञ्जकस्य च विशेषं प्रत्येव सम्भवात्। नापि सामान्यतो घटादिं प्रत्येवं विशेषतो घटाद्यनुत्पत्तेः तावन्मात्रात् विशेषोत्पत्तेर्व्विशेषेषु विनिगमना न स्यात् प्रतिविशेषं चोत्पत्तेः प्रागवर्त्तमानत्वादसन्निकर्षादध्यक्षविषयतानुपपत्तेः कार्य्यसत्त्वकालञ्च सामग्र्यभावात् न तज्जननकाल इति तदानीं तज्जननविशिष्टता कथमध्यक्षा स्यात् प्राक् तदग्रहणेन संस्कारसाचिव्यस्याप्यसम्भवात् एवं क्वचिदपि हेतुत्वे साक्षात्कारासम्भवेन किम्मूलव्याप्तिग्रहात्तत्त्वानुमापि स्यात् प्रतिवन्दी चास्मिञ्चनवादिनि न स्याने। कादाचित्कत्वानुपपत्त्या तद्ग्रह इति चेन्न वैयधिकरण्यात् कथमपि सामानाधिकरण्ये तदुपपादकस्योपपाद्यवदनुपपत्तावविशेषादविशेषिताभोगादित्वेनापि शक्योपपादनम्। वैयधिकरण्येऽप्युपपाद्यासम्बन्धेऽदनियमः सम्बन्ध-

स्तीति मतिबल्कत्वेतीति प्रमापातः । आगन्तु-
कत्वे च तदुत्पत्तेः प्राक्कारणत्वं क्वापि न
स्यात् तथाप्यज्ञातत्वे घटाद्यपि किं न तथा स्यात्
व्याष्टत्तेष्वनुगतौ च सर्वं प्रति सर्वकारणत्वापा-
तात् प्रतिकार्य्यव्यक्ति तत् पृथगिति चेन्न
साधारणस्यापि तद्गतस्य स्वरूपस्य घटादि-
कारणात्मतयानुवृत्तौ घटकारणस्यापि तन्तु-
कारणत्वाप्रसक्तेः कारणत्वमात्रेण तदनुगतं
रूपं न घटकारणत्वादिनेति चेन्न घटादिवि-
शेषानुपसंहितकारणमात्रस्य किं प्रतीत्यनिर्दे-
श्यस्य सद्भावे प्रमाणाभावात् अन्यथा यदि
किञ्चित्प्रति कारणे सामान्यतः कारणत्वं नाम
धर्मः स्यात्तदा तस्या एव व्यक्तेः किञ्चित् प्रत्य-
कारणस्यादकारणत्वमपि रूपं तव स्यादित्य-
नपेक्षितविशेषकारणत्वाकारणत्वाध्यासाद्भेदे-
नैकमात्रमेवोच्छिद्येत् । किञ्च कार्य्यव्यक्तेः का-
रणमस्ति न वा न चेन्नित्यसत्त्वासत्त्वयोरन्य-
तरप्रसङ्गः अस्ति चेत् किं तत् कारणं व्यक्ति-
विशेष इति चेन्न पूर्वभावस्य रासभादिसाधा-
रणत्वात् तां तां कार्य्यव्यक्तिं प्रति तस्याः किं

तत् कारणत्वं स्वरूपमेवेति चेन्न तस्य व्या-
वृत्तत्वात् तस्य तत्कारणात्मत्वे चातदात्मनां
तत्कारणत्वविरोधात् तत्कारणत्वस्य च सम-
वाय्यसमवायिनिमित्तभूतानेकव्यक्तिसाधारण-
त्वात् अनेकस्य चैकानुगतव्यवहारबुद्धिनिदा-
नत्वे गोत्वाद्युच्छेदप्रसङ्गस्य दर्शितत्वात्।
नियतपूर्वभावित्वमिति चेन्न व्याप्यार्थस्य नियम-
स्यैकस्यासर्वत्र व्यक्तावसम्भवात् पूर्वत्वमात्रस्य चाति-
प्रसञ्जकत्वात्। तज्जातीयं प्रति नियत जाती-
यत्वमिति चेन्न तस्य तज्जातीयव्यक्त्यन्तरसाधा-
रण्यात्। नियत तज्जातीयत्वे सति पूर्वभावित्व-
मिति चेन्न तत्समानकालोत्पत्तिककार्य्यव्यक्ति-
गतजनकव्यक्तिगतसाधारण्यात् तथाभ्युपगमे
चैकसमवाय्यादिनाशे सर्वतत्कार्य्यनाशप्रसङ्गः।
तत्कालजातीयसामग्रीतः सर्वतत्कालजातीयो-
त्पत्तौ सामग्रीभेदस्य कार्य्यभेदहेतुतया प्रत्येक-
मित्थं तत्सामग्रीत्वविकल्पेन कार्य्यव्यक्तिभेद-
प्रतिव्यक्तिस्वरूपभेदयोरन्यतरस्य वक्तव्ये सम-
वायित्वं अप्रत्वपि कार्य्यानुविधायि नियमे-
स्वायमते व्याहतत्वे नानियमात्। नियतजाती-

त्वादेर्वृक्षस्य जननात् पृथक्तया वृक्षव्यक्तिजनन-मापत्तेः । सापि शिंशपासामग्री तद्व्यक्तिमात्र-जनिकेति न व्यक्तिभेद इति चेन्न शिंशपाया-नतिरिक्तस्य वृक्षार्थभावापत्तेः वृक्षशिंशपासा-मग्र्योरेकीकृतयोर्जननाविशेषात् । वृक्षसा-मग्री च वृक्षजनन एव कथं कश्चिच्छिंशपासा-मग्रीं कश्चित्पलाशसामग्रीमपेक्षेत इति स्यात् एकस्य वृक्षलक्षणस्य कार्य्यस्य सामग्रीभेदे भेदापातात् अनुगतायाश्च वृक्षसामग्रीत्वे पृथ-ग्वृक्षव्यक्तेः पृथक् शिंशपादिव्यक्तेः उत्पत्त्यापत्तेः इत्यादि स्वयमूहनीयम् ।

नियमे प्राक्कालीनतयाभिधीयमाने प्रा-गित्यस्य व्यवच्छेद्यौ वर्त्तमानभविष्यत्कालौ प्राक्-कालस्य व्यवच्छेदकोऽविवेचनीयः । न च तद्विवे-चनं शक्यं वर्त्तमानादिबुद्धय एव स्वविषयवै-चित्र्यप्रमाणमिति चेन्न तथा हि वर्त्तमानादि-बुद्धेरेव को विषयः । कालविशेष इति चेत् कालस्य विशेषः स्वाभाविक औपाधिको वा । नाद्यः कालस्य भवद्भिरेकत्वाभ्युपगमात् स एव कालो वर्त्तमानः प्रतीयते स एव पूर्वं भावीति

मयाद्भूत इति च न प्रतीयेत । किंविषयस्वभाव एवासाविति चेन्न भेदप्रसङ्गात् व्यवस्थानुपपत्तिप्रसङ्गाच्च यदैव वर्त्तत इति प्रत्ययस्तदैव वृत्तो वर्त्तिष्यत इति प्रत्ययप्रसङ्गात् । द्वितीयश्चेदुपाधिरभिधीयतां सूर्यादिक्रियासम्बन्धैर्भेदः स इति चेन्न भूतभविष्यतोरपि क्रियासम्बन्धप्रत्ययस्यावश्यं वक्तव्यत्वात् य एव दिवसः सूर्यगतिविशेषावच्छिन्नो वर्त्तत इति प्रतीतः स एव हि तदवच्छिन्नो वृत्त इत्यवगम्यते वर्त्स्यन्निति च न हि निर्विशेषस्य कालस्य तदतीतत्वं प्रतीयतेऽनागतत्वं वा किन्तूपाधिविशेषणेनैवावच्छिन्नस्य येनैवासौ पूर्वं दिनान्तरात् व्यवच्छिन्नो वर्त्तत इति प्रतीतः तेनैवोपाधिना तत एव व्यवच्छिन्नो वृत्त इति वर्त्तिष्यत इति च कदाचित् ज्ञायते । ननु सत्यमेतत् परं यदा तदुपाधिसम्बन्धस्तस्य स्वरूपेणावतिष्ठमानस्तदा वर्त्तमानप्रत्ययः यदा स एव विनष्टो भवति तदा भूतप्रत्ययो यदानागतस्तदा भविष्यत् प्रत्यय इति नैतदस्ति यदाव स्वतो विनिश्चितार्थस्तदा तज्ज्ञानस्यैव तज्ज्ञानो-

पायत्वमित्यात्माश्रयानवस्थयोरन्यतरप्रसङ्गः ।
विनष्टादिशब्दाच्चातीतादिप्रत्ययास्तेषां सर्व-
षामेव अर्थे निरूप्यमाणे तन्मध्यपतितमेक-
शब्दं प्रयुज्य तन्निरुक्तिं कुर्वाणः स्वाध्यप्रश्नो
मातापितृमानसि । तत्क्रियावच्छिन्नः कालो
वर्त्तमानः तत्प्रागभावावच्छिन्नो भविष्यन् तद्ध्वं-
सावच्छिन्नो भूत इति, चेन्न अतीतानागत-
प्रतीतिकालेऽपि क्रियावच्छिन्नः प्रतीयत इति
वर्त्तमानप्रत्ययप्रसङ्गस्य तादवस्थ्यात् । क्रिया-
नवच्छिन्नस्य तस्य तत्प्रागभावप्रध्वंसाभावाव-
च्छेदानुपपत्तेः प्रागभावस्य प्रागवधिनिरुक्तया
कथं न दुरधिगमः प्रध्वंसस्यापि प्रागभावात्
कथं विशेषो वक्तव्यः । अभावो विनाशी प्राग-
भावः उत्पत्तिमान् ध्वंस इत्येतयोर्विशेष इति
चेन्न को हि प्रागभावस्य विनाशो येन विना-
शीत्युच्यते । यदि प्रतियोगिभूतो घटादिः प्र-
ध्वंसस्यापि प्रागभाववत् प्रतियोगीति सोऽपि
विनाशी प्राप्तः । उत्पत्तिमांश्च ध्वंस इति
उत्पत्तिपदार्थो विवेचनीयः । यद्यसावसतः
सत्त्वं तच्च सामान्यं तदा अभावे [illegible] ।

अथ स्वरूपसत्त्वं तदा प्रागभावेऽपि प्रसङ्गः तस्यापि कदाचिदसत्त्वात् पूर्व्वमसतः पश्चात् सत्त्वं विवक्षितमिति चेन्न पूर्व्वेदानीं पश्चा-दर्थस्यैव निरूप्यमाणत्वात्। एतेन कारणाव-च्छिन्नं सत्त्वमुत्पत्तिरित्यपि निरस्तं पूर्व्वापर-निर्व्वचनमन्तरेण कारणार्थो निर्व्वचनात्। अस्तु तावदतीतानागतयोर्यथातथानिरुक्तिः यत्क्रियावच्छिन्नो यः कालः स तत्क्रिया-पेक्षया वर्त्तमानो नत्वन्यापेक्षयेति चेत् तद-पेक्षयेति कोऽर्थः। किं तदुपधानेन उत तद-वधिकतया तत्प्रतियोगिकतया उत तेन प्र-कारेण वा नाद्यः उपाध्यवच्छिन्नस्यातीताना-गतप्रतिपत्तिविषयत्वमपि तस्येत्यसकृदुक्तत्वात्। नापि द्वितीयः अस्मादयं दीर्घ इति वदस्मादयं वर्त्तत इत्यवध्यपेक्षामन्तरेण प्रतीयमानत्वात् सर्व्वदैव च त्रिविधावध्यपेक्षया आसीदस्ति भविष्यतीति प्रत्ययाव्यवस्थाप्रसङ्गात्। अतएव न तृतीयः नापि चतुर्थः अतीतानागतप्रतीति काले क्रियावच्छेदप्रकारेण वर्त्तमानप्रत्ययवि-षयत्वप्रसङ्गात्। नासौ क्रियावच्छेदस्वभा

प्रकाशोऽतीतानागतकाले वर्त्तत इति चेन्न वर्त्तमानतया अद्याप्यनिरूपणेन वर्त्तत इत्युक्ता विशेषस्य दर्शयितुमशक्यत्वात् तत् क्रियाकाले तत्क्रियावच्छिन्ना वर्त्तमानता इति चेन्न कालस्य कालाश्रयतया निरूपणासम्भवात् कालान्तरस्यानभ्युपगमात् तस्यैव च कालस्य तदाश्रयत्वे व्यक्तमात्माश्रयत्वापत्तेः। स्यादेतत् ग्राहकविज्ञानविषयो ग्राहकविज्ञानाश्रयस्य कालो वर्त्तमानः वर्त्तमानोपाधिप्रागभावावच्छिन्नस्य पूर्व्वः तत्प्रध्वंसावच्छिन्नस्यानागतः प्रागभावप्रध्वंसयोश्च स्वाभाविकमेव भेदमादाय व्यवस्था प्राग्व्यवस्थाहेतुरभावप्रागभाव इति स्वभावभूतस्यैव विशेषस्य कार्य्यमादाय लक्षणम् अनागतव्यवस्थानिदानमभावः प्रध्वंस इति च प्रध्वंसस्येति मैवं ज्ञानास्वप्रकाशतापक्षे स्वोपस्थितस्य स्वयं ग्रहणानुपपत्तेः कथं वर्त्तमानता ग्रहः ज्ञानान्तरेण तथाग्रहे वर्त्तमानतावभासाङ्गीकारे तदासौ दृष्टोमयेतिप्रत्ययस्य तदासौ मया दृश्यते इत्याकारतापत्तिः। अत एव स्वप्रकाशपक्षे ———रः। यावानर्थः

स्वप्रकाशे वर्त्तमानतयोक्तः तावत एव परिच्छेदग्रहणे व्यभिचारात् स्वप्रकाशतायाश्चाविशेषेऽपि विषये विशेषाभावात् स्वरूपमेव विशेष इति चेन्न तस्यानुगमाननुगमाभ्यामनुपपत्तेः प्राक्प्रध्वंसाभावयोश्च स्वरूपतो विशेषेऽपि कतरो भूतभव्यव्यवहारस्य कतरस्यानागतव्यवहारस्योपाधिरित्यनुयुक्ते कार्य्यभेदजनकतया च तन्निरुक्तावुत्तरे पूर्व्वप्रत्युक्तां पूर्व्वतापरतानिरुक्तिं विना जन्यजनकत्वाज्ञानमिति। उपाधिभेदाच्च कालभेदे योप्येकतयाभिमतः कालः सोऽपि चन्द्रसूर्य्यक्रियाद्यसंख्योपाधिभेदसम्बन्धेन नाना स्यात् तत्रायमेवोपाधिर्नायमिति चाविनिगम्यत्वात् प्रतिक्षणस्वभावभेदवादिपक्षेऽपि च नानाक्षणेषु वर्त्तमानत्वादिव्यवहारार्थमुपाध्यनुसरणावश्यम्भावेनोक्तोपाधिदोषग्रासस्यैवापातादिति।

ननु तथापि विषयभेदेनावश्यम्भावितव्यं प्रतीतिभेदस्य दुरपलापत्वात् अतः सामान्यतः सिद्धौ विशेषतोविवेचनाशक्तौ संशयएवास्त्विति चेन्न संशयस्यापि निर्व्वक्तुमशक्यत्वात्

धर्म्मदर्शनादेर्व्विशेषद्वयस्मरणादेश्च साधारण-
धर्म्मीविशेषद्वयज्ञानप्रत्यक्षत्वादावपि हेतुत्वेन
साधारण्यात् अदृश्ये च तस्मिन् लिङ्गाभावात्
तेन कार्य्ये विशेषजात्याधानस्य निरस्तत्वात्
तस्या विषयत्वेनानुव्यवसाय साक्षिकार्य्यगत-
विशेषीभवनासामर्थ्यात्। नापि तृतीयः तस्य
दर्शयितुमशक्यत्वात्। न च द्वितीयः धर्म्मिस्वरू-
पादेरपि तद्विषयतया संशयितत्वप्रसङ्गात् न
चैवं नह्ययं स्थाणुर्व्वा पुरुषोवेति संशये सतीद-
मापरात्रप्रमाणस्य ऊर्द्ध्वत्वशालिनोधर्म्मिणः
स्वरूपसत्त्वेऽपि स्वरूपमेव भवति नवेति द्रष्टु-
रभिमानोव्यवहारो वा किन्नामकः स्वरूपस-
त्तांशमात्रावलम्बिनस्तस्य ज्ञानस्य निश्चयत्वमेव
ततः किमिति चेन्न एकस्यैव ज्ञानस्य निश्चयत्व
संशयत्वजातिसङ्करः। स प्रामाण्याप्रामाण्य-
वत् भविष्यतीति चेन्न अतएव हि तयोरपि
जातित्वानङ्गीकारः। किन्नाम तथाभूतातथा-
भूतार्थत्वलक्षणोपाधिद्वयरूपतास्वीकारः एव
तयोः यदा च संशयत्वनिश्चयत्वलक्षणजाति-
द्वयसम्भिन्नं तद्विज्ञानमाश्रीयते तदा कश्चित्

विषयमपेक्ष्य संशयत्वं कञ्चिदपेक्ष्य निश्चयत्व-मित्यापेक्षिको जातिव्यवस्थितिरपीत्यपूर्व्वः पन्थाः इहशस्य पशः पाश्वेनापि भवता किं नि-यामकमभिधेयं येन धर्म्मिणि तस्य निश्चयत्वं व्यवतिष्ठेत। विशेषद्वये च संशयत्वं विशेष-दर्शनादर्शने इति चेत्तर्हि भवति स्थाणोः स्थाणुत्वं पुरुषत्वं पुरुषस्य विशेषः प्रतीयते चासाविति विशेषदर्शनात्तत्रापि निश्चयत्वप्र-सङ्गः। संशयात् पूर्व्वं नास्ति विशेषदर्शनमिति युक्तास्तत्रापि संशय इति चेन्न धर्म्मिधियः पूर्व्वं तर्हि कथं तद्गतविशेषदर्शनं स्यात् संशयकाले चास्ति विशेषदर्शनमित्यनन्तरं तर्हि संशयानु-त्पत्तिप्रसङ्गोऽपि युक्त एव तदीयविषयात् विशे-षात् व्यतिरिक्तस्य विशेषस्य दर्शनंविवक्षित-मिति चेन्न स्थाणुर्वा पुरुषोवेति संशयानन्तरं दारुमयो मांसमयोवायमिति संशयोनोपपद्यते तदुभयमयत्वव्यतिरिक्तयोः स्थाणुत्वविशेषयोः र्वज्ञानोल्लिखितत्वात्। अन्यतरविशेषदर्शनं संशयप्रतिरोधकं संशये तूभयोरूपदर्शनमनु-अतोनोक्तदोषप्रसङ्ग इति चेत् तर्हि स्थाणुः

पुरुषश्चेति कुतोऽपि भ्रमे जाते दारुमयो वा मांसमयोवेति संशयप्रतिरोधो न स्यात् पूर्व्वज्ञानेन विशेषद्वयोपदर्शनस्य कृतत्वात् विशेषदर्शनं हि विशेषनिश्चयोविवक्षितो न तु विशेषज्ञानमात्रं येन संशयोपनीतादपि विशेषात् संशये प्रतिरोधः प्रसज्येतेति चेत् मैवं संशयेन यावुपदर्शितौ विशेषौ तत्र न संशयस्य निश्चयत्वमिति व्यवस्थायां सिद्धायाम् उपदर्शितनियामकसिद्धिर्भवति सिद्धे चास्मिन् नियामके संशयस्य विशेषद्वयं प्रति निश्चयत्वं नास्तीति सिध्येदित्यन्योन्याश्रयापत्तेः को वारयिता। स्यादेतत् संशयज्ञानस्य धर्म्मिविषयत्वेऽभ्युपगम्यमाने त्वद्वैशसमापद्येत तत्र तदनभ्युपगम एव निवर्त्तते तेन धर्म्मिज्ञानं निश्चयात्मकम् अन्यदेव स्थाणुर्वा पुरुषोवेति चान्यदेव संशयज्ञानं प्रत्यभ्युपेष्याम इति चेत् मैवम् एकधर्म्मिसम्बन्धोपनयव्यतिरेकेण स्थाणुत्व पुरुषत्वयोर्व्विरोध एव नास्तीति स्थाणुर्वा पुरुषोवेत्येतदेव न स्यात् न हि यस्य कस्यचित् स्थाणुत्वेन यस्य कस्यचित् पुरुषत्वं विरुध्यते धर्म्मिसम्बन्ध-

मनन्तर्भाव्य विरोधे जगति तयोरन्योन्यस्य व्यतिषक्तयोरसत्त्वमेव प्रसज्येत तस्य धर्म्मिणो वा पुरुषत्वनिर्णयाद्यथा संशयोनिवर्त्तेत नोपपद्येत वा तथा स्वात्मनः पुरुषत्वनिर्णयात् संशयोनिवर्त्तेत नोत्पद्येत वा विशेषाभावाद्यथाद्रष्टुर्न स्वशरीरविषयः संशयस्तथैव हि पुरोवर्त्तिविषयोऽपि नासौ कथञ्चिदमर्थेन सामानाधिकरण्याभिमानः योऽमूर्त्तताधर्मी स किं स्थाणुरुत पुरुष इति कस्माद्वा प्रत्यभिज्ञादयोऽप्येकं ज्ञानमङ्गीकृता इत्युच्छिन्ना विशिष्टज्ञानसङ्कथा सञ्ज्ञातस्य गौरवश्वः पुरुषः इतिवत् विशकलितोविज्ञानसंसार इत्यास्तां विस्तराभिनिवेशः ।

नन्वस्ति तावत् स्थाणुर्वा पुरुषोवेति परस्परविरुद्धार्थावगाही प्रत्ययः स्वविषयं तथाभूतमुपस्थापयिष्यति न चक्रबाधकैः सर्वप्रकारखण्डने परिशेषासम्भवात् यत्र स्वरूपमादाय विरुद्धार्थत्वमभिधीयते तदपि निर्वक्तुं न शक्यते तथा हि भावतदभावयोः कोऽविरोधः सहानवस्थानमिति चेत् देशभेदेन सहा-

प्यवस्थानात् देशाभेदेनेति चेन्न संयोगाद्यव्याप-
कत्वं मद्यभ्युपैषि तदा तथाप्यनुपपत्तिः। प्र-
कारभेदेन तथाभावस्याभ्युपगमात् तस्य पक्षे
एकेन प्रकारेणैकस्मिन् सहानवस्थानं वि-
रोधः संयोगाद्यव्यापकत्वानभ्युपगन्तृपक्षे च
देशाभेदेन सहानवस्थानं स इति चेन्न तर्हि
तदुभयावस्थानसाहित्यनिषेधो वा तदुभयाव-
स्थाननिषेधसाहित्यं वा स्यात् आद्ये अप्रसिद्ध-
प्रतियोगिकत्वं तदुभयावस्थानसाहित्यस्य
क्वचिदप्यप्रमितेः शशविषाणनिषेधादेस्तु श-
शके विषाणनिषेधादिरूपत्वाङ्गीकारेण प्रसिद्ध-
प्रतियोगिकत्वाभ्युपगमात् यदाहैको वस्तुनः
प्रतियोगितेति अन्यस्तु। लब्धरूपेक्वचित् कि-
ञ्चित् तादृगेव निषिध्यतीति द्वितीये तु तदुभ-
यावस्थानसाहित्यस्वीकार एव स्यात् तदुभयनि-
षेधयोस्तदुभयतयैवाङ्गीकारात्। परस्परप्रति-
क्षेपकत्वं विरोध इति चेन्न तर्हि परस्परप्रति-
क्षेपं प्रति कारणत्वं वा तदात्मत्वं वा न प्रथमः
प्रमाणाभावेन तथाविधतत्कार्य्यानङ्गीकारात् न
द्वितीयः प्रतिक्षेपशब्दार्थस्योभयानुगतस्यानि-

वचनात् यत्रैकस्य सत्त्वं तत्रापरस्य सत्त्वं नियमेन यत् स विरोधस्तयोरिति चेन्न सत्त्वासत्त्वयोरेकापराश्रयत्वयैयधिकरण्यात् सम्बन्धतद्व्यतिरेकत्वे च एकसत्त्वस्यैव चापरात्मकतया स्वीकारेण यत्रैकस्य सत्त्वं तत्रैकस्य सत्त्वमिति वचनार्थप्रसङ्गेन पौनरुक्त्यादव्याप्त्यापातात् यत्र घटाभाव इत्यस्य खल्वयमर्थः यन्नाम यस्याधेयतया सम्बन्धी घटाभावः तत्रैव घटोनास्तीत्यस्याप्ययमर्थः तस्याधेयतया सम्बन्धी घटाभाव इति यत्र घट इत्यस्य कोऽर्थः यस्याधेयतया सम्बन्धी घटः तत्र घटाभावो नास्तीति कोऽर्थः तस्याधेयतया सम्बन्धी घटाभावसम्बन्धनिषेधः घटाभावसम्बन्धस्य घटाभावात्मकतया घटाभावनिषेधस्यापि घटात्मकतेति तस्मात्तस्याधेयतया सम्बन्धी घट इत्येवार्थः अतो घट तदभावयोर्भेदं मनसि कृत्वापि न विप्रतिपत्तव्यमिति यत्रैकस्यावस्थानं तत्रैकस्यैवेतिनियमाभिप्रायेणापौनरुक्त्यादिरिति चेन्न नियमस्य यत्किञ्चिदन्यव्यवच्छेदकत्वेनासिद्धत्वापातात् विरोधिव्यवच्छेदकत्वस्य च विरोधानिर्वचनात्

भावपक्षेऽभावव्यवच्छेदोऽभावपक्षे वा भावव्यवच्छेदो नियमार्थ इति चेन्न एकरूपानभिधानेऽनुगतरूपविरोधानिर्व्वचनात्। किं वा भावाभावव्यवच्छेदयोरभावभावविधानातिरिक्तयोरनभ्युपगमे पुनरपि च यत्र भावस्तत्र भावः यत्राभावस्तत्राभाव इत्युद्देश्यविधेयभावानुपपत्तेरभेदादिति पौनरुक्त्याधिकफलाभाव एव स्यादेतत् भावाभावयोः स्वरूपमेव विरोधः न चैवं सत्यविरुद्धतापत्तिः यथा सत्ताभावरूपैव सती स्वात्मनि सदिति अवितुर्व्यवहारं करोति तथाभावाभावौ विरोधात्मानावेव स्वात्मनि विरुद्धरूपं अविरुद्धव्यवहारम्। कुर्य्यातेकस्येतौ विरोध इति चानुयोगे स्वाश्रयस्येत्युत्तरं किन्तत्र विरोधफलमिति प्रश्ने भेदव्यवस्थानमित्यभिधेयम्। यदाह अयमेव हि भेदोभेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति तदेतदनुपपन्नं एतयोर्हि विरुद्धत्वं प्रत्येकं वा स्यात् मिलितयोर्वा नाद्यः प्रत्येकमेवाश्रयैकत्वभङ्गप्रसङ्गात् नैकत्वाभावो भेदोऽभिमतः किन्तु अन्योन्याभयापेक्षभेदरूपविरुद्ध-

धर्म्मवत्त्वमिति चेन्न तस्याभावात् कालभेदेने-
कस्य भावाभावाश्रयत्वाभ्युपगमात् तदभेद इति
चेन्न तदभेदस्य स्वाभाविकस्य विवक्षितत्वे
विशेषणवैयर्थ्यात् एकोपाध्यवच्छिन्नत्वस्य विव-
क्षितत्वे कालभेदाभिमतेऽपि सम्भवात् भिन्नो-
पाध्यनवच्छिन्नत्वस्य विवक्षितत्वेऽसम्भवात्
असहावच्छिन्नभिन्नोपाध्यनवच्छिन्नत्वस्य वा-
ञ्छितत्वे सहसत्त्वस्य च कालरूपत्वेन तत्रापि
कालभेदविकल्पावृत्त्यापत्तेः मिलितत्वञ्चा-
नयोरेकदेशत्वं वा एककालत्वं वा एकप्रका-
रेण वृत्तिर्वा वृत्तिप्रकारान्यैकोपाध्यवच्छेदो
वा नाद्यः भावात्यन्ताभावयो स्तदभावात् न
द्वितीयः भावस्य प्रध्वंसप्रागभावाभ्यां तदनुप-
पत्तेः न तृतीयः संयोगाद्यव्याप्यवृत्तितावादि-
पक्षे गमनादौ संयोगभावाभावयोस्तदभा-
वात् अव्याप्यवृत्तिधर्मानभ्युपगन्तृपक्षे भावाभा-
वयोर्वृत्तौ प्रकारान्तराभावे प्रमाणाभावात्
नापि चतुर्थः स हि यदि निर्देष्टुं शक्यते त-
दापि भावप्रागभावयोर्भावप्रध्वंसयोश्चैकदान-
भ्युपगमेन तद्विशेषितयोरप्येकदावस्थानमनभ्युप

गन्तव्यतया कदा विरोधस्य तदाश्रयतेति वक्तुमशक्यत्वात् किञ्च भावप्रागभावयोर्भावप्रध्वंसयो यदि तथा भावोऽभ्युपगम्यते तदा आश्रयभेदप्रसङ्गः अभावान्तरेऽपि सावकाशत्वान्न परस्परप्रतिषेधात्मकत्वञ्च । अथ नाभ्युपगम्यते तदा भावप्रागभावयोर्भावप्रध्वंसयोश्चाविरोधापत्तिः तत्तदसत्त्वयोर्व्विरोधो न तु तत्तदसत्त्वविशेषयोरिति चेन्न विशेषस्य तथाप्यविरोधात् कदापि सद्भावस्थितियोग्यतापत्तेः नियमेन तथात्वे वा अविरोधव्याघातात् भाव शब्देन च यदि विशेषशून्यत्वमसत्त्वस्योच्यते तदा तदनभ्युपगम एव प्रमाणाभावात् न हि निर्व्विशेषासत्त्वमात्र सद्भावे प्रमाणमभिधातुं शक्यते । अथ भावशब्दोपादाने सत्यपि विशेषे असत्त्वस्य साधारणरूपपुरस्कारेण विरोधस्य व्यवस्थितिप्रदर्शनार्थं तदा भावप्रध्वंसयोस्तादृगेवास्तु दोषापत्तिः प्रध्वंसादौ विशेष सामान्यरूपस्यासत्त्वस्याभ्युपगम्यमानत्वात् तदाप्येव विशेषे विरोधस्यावस्थानात् भावाभावयोर्व्विः

दोषानभ्युपगमे तत्राप्यनिष्टापत्तिरिति चेत् केयमापत्तिः । तर्कभेद इति चेत् ।

अथ कस्तर्कः अभ्युपगतव्याप्यं प्रति व्यापकप्रसञ्जनं सः तत्प्रसञ्जनञ्च स्वीकारार्हताबोधनमिति चेन्न अव्याप्तेः अस्ति ह्यप्रसङ्गेऽपि सम्भावना नाम तर्कः तद्यथा यदि जलं सहकारिभिः सम्पत्स्यते तदा मे हर्षं जनयिष्यतीति इष्टापादनेऽपि गतत्वाच्च । अनभ्युपेतव्यापकमित्यपीति चेन्न तथाभूतमपि प्रत्यव्याप्यात् व्यापकप्रसञ्जने गतत्वात् व्याप्येनेत्यपि कार्य्यमिति चेन्न विकल्पासहत्वात् किं परमार्थतोव्याप्यव्यापकभावव्यवस्थितयोः स्वरूपेणेष्टानिष्टत्वम् उत व्याप्यव्यापकभावेन तत् । नाद्यः तथात्वाज्ञानेन वैपरीत्येनेष्टेनापि प्रसञ्जनप्रसङ्गात् अन्यथा परैस्तथात्वेनानङ्गीकृतेन स्वयमपि परान् प्रति तथात्वेन व्युत्पादयितुमशक्येन परमार्थस्तथाभूतेन प्रसञ्जने जयप्रसङ्गात् । न द्वितीयः स्वयमपि तयेष्टानिष्टतायां सत्यां कृतेतादृशि प्रसङ्गे यत्नोभयोरित्यादिना द्वेधा तत्प्रसङ्गस्यानिष्टेऽपि गतत्वादतिव्यापकत्वात स्वयं

व्याप्यतयानिष्टेनेत्यपि विशेषणीयमिति चेन्न स्वयमपि व्याप्यतयेष्टेन स्वमानेष्टव्यापके वि-षये प्रसङ्गस्याव्यापनात्। अथ स्वयमनिष्टव्या-पके स्वयं व्याप्यतयेष्टेन यत्र भवति तत्तथान-भ्युपगतव्यापकं परं प्रति पराभ्युपगतेन व्या-प्येन व्यापकप्रसञ्जनं तर्कः एवं सति हि स्वानिष्ट व्यापके स्वयमिष्टव्याप्येन यत्र प्रसङ्गः तत्र गम-नादतिव्याप्तिर्या च स्वमानेष्टव्यापके स्वय-मपि व्याप्यतयेष्टेन प्रसङ्गस्याव्याप्तिः ते निरस्ते भवत इति चेन्न यद्यत्र घटोऽभविष्यत् तदा ऽद्रक्ष्यदित्याद्यव्यापनात् तत्र स्वयमनिष्टदर्शन-रूपव्यापके स्वयं व्याप्यतयेष्टेनैव हि दर्शनयो-ग्येन घटसत्त्वेनासौ प्रसङ्गः। अथ तत्र सत्त-याऽपि स्वयमिष्टेनेति निषेध्यकोटौ प्रवेश्य निषे-धोऽभिधीयते एवं यत्र भवति तदपि न पश्-यते विपर्य्ययापर्य्यवसायिनि गततयातिव्या-पकत्वात् विपर्य्ययपर्य्यवसायित्वेत्यपि प्रवेश्य-मिति चेन्न केवलपरप्रसङ्गस्थाने परमात्रा-भ्युपगमस्य व्याप्यत्वेनैव व्यमस्य परं प्रति व्यापकप्रसञ्जनस्याव्यापनात् तत्र स्वयं व्याप्ता

मभ्युपगमेन विपर्य्ययपर्य्यवसायित्वासम्भवात् समप्रसङ्ग एव न भवति विरोधमात्रं तदित्यनेन अनिष्टं व्याप्याभ्युपगमबलेन परं प्रत्यापाद्यत इत्येवम्भूतस्यार्थस्योभयत्रापि तुल्यत्वात् तुल्यत्वेऽपि लक्षणकरणासामर्थ्यात् यदि विपर्य्ययपर्य्यवसायिन्येव प्रसङ्गत्वं त्वया परिभाष्यते तर्हि मयापि परबाधनमात्रस्यैव एव प्रसङ्गतायाः विपर्य्ययपर्य्यवसायिनि तु तत्र विरोधतायाः परिभाषितुं शक्यत्वात् अन्यथा विरोधित्वमेवोभयोरपि स्यात् प्रत्यवस्थानवैचित्री चेत्तत्र विरोधाद्विशेषः सात्रापि तुल्यैव यत्रैव सम्भावना तर्कादन्यैवेति निरस्तम् आरोपादपि व्याप्यतानिमित्तव्यापकाभ्युपगमाविशेषात् अतएव परप्रमितेनेति विशिष्य परानिष्टापादानमात्ररूपविपर्य्ययापर्य्यवसायितर्कता निरस्येति निरस्तम्। परमार्थतोऽव्याप्यप्रभानेऽपि पराभ्युपगममादाय प्रसङ्गप्रवृत्तेरुपपत्तेः कथं हि परेण व्याप्यतयानुमतं प्रति व्यापकानुमत्या नापतितव्यं न हि प्रसङ्गो वास्तवत्वं व्याप्तेरपेक्षते किन्त्वाभ्युपगममात्रम् अनभ्युपगतो-

वस्तुगत्या स्थितेनापि तेनापादनाप्रवृत्तेः अत-
एव परस्य प्रमाणेन व्याप्यानुमितिमुत्पाद्यापा-
दनं क्रियते वस्तुगत्या व्याप्यत्वञ्च तथात्वेनाभ्युप-
गतत्वञ्च द्वयमपि प्रसङ्गाङ्गस्यासङ्गमिति चेन्न
तथात्वे नाभ्युपगमस्यावश्यं प्रसङ्गाङ्गतया मन्त
व्यस्य परानपेक्षस्यैव समर्थत्वेन वास्तवव्याप्यत्व-
स्यापि प्रवेशने प्रमाणाभावात् तस्माद्यः प्रसङ्गः
स्वपक्षसिद्ध्यङ्गं तस्य विपर्य्ययापर्य्यवसायिता
दोषायैव स्यात् प्रसङ्गस्य विपर्य्ययपर्य्यवसान-
दार्ढ्यार्थं दण्डतयोपन्यासात् सौगतानां सत्त्व-
क्षणिकत्वव्याप्तिसाधकविपर्य्ययान्यथाभावदण्ड-
प्रसङ्गवत् तामन्तरेण तस्य स्वपक्षसाधनाक्षम-
त्वात् तस्य व्याप्तिवास्तवत्वमपि मन्तव्यम् अन्यथा
विपर्य्ययेऽपि व्याप्त्यभावेन स्वपक्षसाधनाक्षम-
त्वादेव यस्तु प्रसङ्गः परपक्षबाधमात्रं तत्र
पराभ्युपगममात्रं प्रयोजकं तावतैव परपक्ष-
प्रतिक्षेपक्षमत्वेन वास्तवव्याप्तिविपर्य्ययपर्य्यव-
सानपर्य्यन्तानुसारित्वादिति युक्तं पश्याम
तथा च सति कथितलक्षणासङ्गतिस्तदवस्थैव ।
अथ व्याप्याभ्युपगमेनाप्यनिष्टस्य व्यापकस्य

प्रतीतिस्तर्क इति चेन्न इष्टार्थसम्भावनाया-मव्याप्तेः। तेन व्यापकस्य प्रतीतिः स इति चेन्न इष्टापादनेऽपि गतत्वात् अप्रमितस्य तथेति चेन्न प्रथमानुमानेऽपि गतत्वात् अनुमाने व्याप्यस्य प्रमया तथा न त्वभ्युपगमेनेति चेन्न वस्तु-गत्या व्याप्यस्य प्रमयापि प्रतिवाद्यसिद्धस्य व्या-पकानुमानासम्भवेन तत्राभ्युपगमपर्य्यन्तं गन्त-व्यत्वादेव। नन्वेवमन्यतरासिद्धं व्याप्यं प्रमा-य्यानुमानव्यवस्थापनमुच्छिन्नं तदप्रसाधने-ऽन्यतरासिद्धा तत्प्रसाधने परस्याभ्युपगन्तु-रपसिद्धान्तमनुद्भाव्य वादिना प्रसाधिताद्व्याप्यात् व्यापकसाधने पर्य्यनुयोज्योपेक्षणादिति किं तव तथा न स्यात् किमत्रा प्रस्तुतया चिन्तया अन्यतरासिद्धस्य तावद्व्याप्यस्याभ्युपगमं परेणा-कारयित्वैव न व्यापकसाधनमभ्युपेयं तस्या-प्रमा स इति चेन्न मिथोविरुद्धादौ तर्काभा-सेऽपि गतत्वात् बाधवासिद्ध्यादिव्यतिरेके स-तीति चेन्न सन्दिग्धधूमदर्शनात् यद्ययं धूम-वान् स्यादग्निमानिति सम्भावनायाः परमार्थत-स्तथाविधत्वानात् प्रमात्वं त्वङ्गुमभारयन्त्या

अव्यापनात् तत्कालं प्रमात्वेनाप्रतीयमानेऽ-
पीति येन बहुधोदत्तोत्तरत्वात् सर्व्वस्य चास्य
पूर्व्वोक्तोभयानिष्टव्यापकेष्टव्याप्योदाहरणैक-
त्वेनातिव्यापकत्वात् तद्व्यवच्छेदार्थमारोपितस्य
व्याप्यस्याभ्युपगमेनेति कारणे च सिद्धे तथा-
प्येन प्रसङ्गस्याव्यापनात् तद्यथा कार्य्यत्वाददृ-
ष्टमङ्कुरादि मीमांसकः शंसति तदानीमवि-
शेषेण कर्तृकार्य्यमपि पर्य्यवस्येदस्य तदिति।
अपि चात्माश्रयोऽन्योन्याश्रयः चक्रकं व्याघातो-
ऽनवस्था प्रतिबन्दीत्याद्यापाद्यैर्भिद्यमाना षट्-
तर्कीष्यते स्वरूपञ्चैषां स्वस्याव्यवहितस्वापे-
क्षणमात्माश्रयः अन्योन्यस्याव्यवहितान्योन्या-
पेक्षित्वमन्योन्याश्रयः अन्तरितस्य तदेव द्वय-
मात्माश्रयोऽन्योन्याश्रयश्चक्रकं विरुद्धसमुच्चयो
व्याघातः उपपाद्योपपादकप्रवाहोऽनवधिरन-
वस्था स्वाभ्युपगतदोषतुल्यताप्रतिबन्दीति।
तत्रात्माश्रयस्य सम्बन्धिद्वारभेदादाभासत्वं यथा
प्रमेयत्वस्य चात्मनि वृत्तौ वाचि नैवमपि यथा
नेककालस्थस्य घटस्य पूर्व्वकालवृत्तित्वादेक उ-
त्तरकालवर्त्तिघटमात्रान्तं प्रति कारणत्वेऽन्योन्या-

स्वस्यैव व्यक्तिभेदात् यथा ज्ञानेन संस्कारस्तेन च ज्ञानजनने चक्रकस्यापि तस्मात् यथा बीजेनाङ्कुरस्तेन लब्धः तेन च बीजं जन्यत इत्यत्र व्याघातस्योपाधिभेदात् यथा कालभेदादिना जननाजननादौ अनवस्थायाः क्रियावैपरम्परानन्त्यापेक्षणात् यथा सामग्र्याः कार्यजननाय स्वसामग्र्यानपेक्षणे तामेतामधोधावन्तीमनवस्थामाचक्षते कश्चिन्नैवमिति यथा स्वाश्रये भिन्नबुद्धिजननाय स्वगतभेदानुपजीवनादपि भेदस्यानन्त्ये प्रागलोपादिदोषात् तामेतामूर्द्ध्वं धावन्तीमनवस्थामाचक्षते प्रतिबन्द्याविशेषात् यथा धूमानुमानेऽप्युपाधिशङ्का प्रतिबन्द्यास्तर्कानुकूलत्वादिति तदेतेषामापादनानि तर्काभासाः कथमुक्तलक्षणेन न संग्राह्याः सत्यपि व्याप्त्याद्यदोषे प्रसङ्गस्थानगतेन विशेषणेनाभासीभूतत्वात् । प्रसङ्गस्थाने तावत्तां निर्विशेषणानामभावेनापि लक्षणं विशेषणीयमिति चेन्न अन्योन्याश्रयात्माश्रयप्रयोजकस्य व्यक्तिभेदस्याभावो नानवस्थायामेवमात्माश्रयाभावप्रयोजकस्य द्वारभेदस्याभावो नात्मा-

श्रयान्तरादाविति व्यक्तमव्यापकत्वापत्तेः अपि चापसिद्धान्तविरोधादिष्वपि तर्कलक्षणं गच्छत् कथङ्कारं वारणीयं यत्रैव निग्रहे तर्कान्तराणामन्तर्भावस्तत्रैवानयोरपीति पृथक् निग्रहानुपपत्तेः आत्माश्रयादेश्च मूलव्याप्तौ प्रमाणोपगमश्चेत् तर्हि प्रामाणिकत्वान्निर्दोषत्वं न चेन्मूलशैथिल्यमित्युभयतः पाशबन्धः कथं मोचनीयः। अथोच्यते यदेतदाश्रयत्वमाश्रयित्वञ्च तद्भेदे दृष्टं तद्यदि विवादाध्यासिते द्वयमुपेयते तदा भेदः स्यादित्याकारेणापादने नोक्तदोषापत्तिरिति मैवम्। एकत्र द्वयस्यापि दृष्टत्वात् तदाश्रयत्वं तदाश्रितत्वञ्च मिथोभेदनियतमिति चेन्न तन्मिथःशब्दाभ्यां चारीकृतत्वात् एतदाश्रयत्वादेतदाश्रितत्वाद्वा नैकत्वं स्यादित्यादिवचनभङ्ग्यापाद्यमिति चेत् मैवम्। यद्येतदेवैतदाश्रयादि स्यात् तदैतन्न स्यादित्याद्यापाद्यं, न चैतत् युक्तं धर्मापाद्ययोवर्यात्तत्वात्। न च वाच्यम् आपाद्यस्य प्रमाणबाध्यतानुकूलैवेति व्याघातादपि सा भवन्ती न दोषमावहतीति यत आपाद्याप-

पादकयोः सामानाधिकरण्याभावादेऽतिप्रसङ्गः स्यात् अतो विपर्य्ययापर्य्यवसायित्वमेव स्यादेवं हि विपर्य्ययोपक्रमः।

यन्नाम भवति चैतदेतत् तस्मात् नैतदाख्य इति नचैतदेतत् भवितुं शक्नोति एतदित्युद्दिष्टे धर्म्मिण्येतद्विधानासम्भवात् उद्देश्य विधेययोः प्रकारभेदस्याभावात् न च प्रसङ्गमात्रमेतत् बाधायैवास्तु कृतमस्य विपर्य्ययपर्य्यवसानेनेति युक्तं स्वयमपि प्रसङ्गमूलस्य व्याप्तेरिष्टतया प्रसञ्जितनिषेधे तद्व्यतिरेकप्रामाण्यस्यावश्यमन्तर्व्यत्वापत्तेः। अतएवैतदन्यत् स्यादित्यपि न शक्यप्रसञ्जनम् एतदन्यत्वस्य एतत् स्वरूपभेदमादायैव प्रतीतिपर्य्यवसायितया प्रसङ्गे व्याघातादेवाविपर्य्ययेप्येतद्विशेषितान्यत्वविधायिनोविशेषणतयाप्रविष्टमात्मानमात्मनि विधीयमानं न लभते एतदनन्यत्वस्य एतदन्यान्यत्वस्य एतत्त्वादेव अन्यत्वावधेरात्मन उपलक्षणत्वे चान्यत्वमात्रमुपलब्धमात्ममन्यस्मादन्यत्वमादाय पर्य्यवस्येत स्वरूप एव विलक्षणमन्यत्वविशेषमवधिरात्मोपलक्षयतीति

न घटते यतोऽन्यत्वमात्रमेवावधिविशेषैरुपधीयमानं तत्तदन्यत्वप्रत्ययव्यवहारोपपादकं भवदन्यत्वव्यक्तिभेदपर्य्यन्तं गमनं प्रमाणस्य न सहते यदि चान्यव्यक्तिभेदोऽपि स्यात् तथापि प्रसङ्गमूलभूता व्याप्तिः सामान्याकारपुरस्कारित्वादेतैरेवोपधीयमानामन्यत्वव्यक्तीनाम् ऐक्यमादाय प्रवृत्ता तथैव प्रसङ्गे विपर्य्यये चोपनयन्ती स्यादेवोक्तदोषाकलङ्कनायेति एवं प्रकारता चाश्रयाश्रयिभाववत् प्रकारान्तराश्रयेष्वप्यात्माश्रयोदाहरणेष्वतिदिश्यते। अन्योन्याश्रयो यथा भेदेनावगतात् भेदज्ञानोपगमे सोऽपि त्वया कथङ्कारमुपन्यसनीयः न तावत् यद्येतदेतद्बोधाधीनबोधाधीनबोधं स्यात् तदा न बुध्येतेति तथा सति व्याप्त्यसिद्धेः एतद्बोधाधीनबोधं यत्तद्बोधाधीनबोधस्य तस्यैवादृष्टचरत्वात् कदाचन व्याप्यव्यापकभेदकल्पनया व्यभिचाराप्रतीतचरत्वयोर्वारणेऽप्यतथात्वशङ्काखण्डकतर्कदुर्लभत्वात् एवमन्योन्याश्रयान्तरेऽपि चक्रकस्य मध्ये परमन्तर्भावात्माश्रयान्योन्याश्रयावेव विपरिणमत

इति तद्दोषं नातिक्रामति व्याघातस्तु यथा सन्नास्तीत्यत्र तमपि कथं प्रयोच्यसे यदि यद्ययं सन् स्यात् तदानीमसन्न स्यात् इति तर्हि असन्न स्यादित्यस्यापि सन्न स्यादित्यस्मिन्नेवार्थे पर्य्यवसानात् अभेदेन व्याप्यव्यापकभावस्यैवासिद्ध्यापत्तिः स्वभाव विरुद्धोपजीविनी च विरुद्धान्तरे तद्व्याघातनिरासादेव निरस्तप्राये गौर्महिषस्ततो न भवति अगवात्मता नियता यतो महिषात्मतेति एष हि तयोर्व्विरोधः अनवस्था तु यथा सत्तायामपि सत्तान्तरमित्यनवधौ सत्ताप्रवाह इष्यमाणे तत्र कथं प्रत्यवस्थेयं न तावत् यदि सत्तायां सत्ता स्यात् तदा न विश्रान्तिः स्यात् सत्तायां सत्ताभ्युपगमस्य विश्रान्त्यभावेन सह व्याप्तिसिद्ध्यसिद्ध्योर्दोषग्रस्तत्वात् प्रति बन्दी च खण्डितैव। किञ्च प्रमेयत्वाभिधेयत्वव्यवहार्य्यत्वसन्निकर्षवत्ताभाव प्रतियोगित्वादीनामात्माश्रितत्वदर्शनात् कथमात्माश्रयताखण्डिका व्याप्तिः सव्यभिचारा न स्यात् द्वारव्यक्तिभेदस्यापि व्यभिचारव्यतिरेकित्वात् स्वप्रकाशवादिना स्वयमेव स्वज्ञा-

नस्य एवमभावेऽभावमस्वीकुर्व्वता स्वयमेव स्वा-
भावत्वस्य एवं तदेव ग्राह्यं तदेव ग्राहकस्यात्म-
प्रतीतौ एवं तदेव ज्ञाप्यं ज्ञापकारणञ्च
शब्दोवाचक इत्यत्र एतञ्च तदेव नाश्यं नाश-
कञ्च प्रध्वंसिनि एवं तदेव सम्बन्धि सम्बन्धश्च
स्वभावसम्बन्धोपगमे इत्यादि बहुलमुपगमा-
दात्माश्रयतदाभासविवेकाय किन्नियामकमुपे-
यम्। अन्योन्याश्रये चान्तरोपान्तरशब्दयो-
रन्योन्यनाशकतायां समव्याप्तिकयोश्चान्योन्य-
व्याप्यव्यापकतायाम् एककार्य्यकारिणाञ्चा-
न्योन्यसहकारितायामेवमन्यस्मिन्नपि तत्र तत्र
दर्शनात् कथं न व्याप्तिभङ्गः कश्च विशेषो-
यद्व्यतिरेकोविशेषणमुपादीयेत। तत्र तत्रा-
विरोधात् नैवमिति चेन्न अन्यत्र तथाभाव-
दर्शनस्य विरोधाभ्युपगममूलस्याविशेषात्। तत्र
तत्र तथात्वे प्रमाणसद्भाव एव विशेष इति
चेत्तर्हि सर्व्वत्रानभ्युपगममूलं तथात्वे प्रमाणा-
भाव एवोपजीव्योदूषणाभिप्यतां कृतमन्योन्या-
श्रयेण व्यभिचरितदोषत्वेनेति। चक्रकेऽपि
दुःखजन्मादिस्वलोकादिषु व्यभिचारदर्शनात्

अव्याप्तिर्व्विशेषव्यतिरेकदर्शनदुःसहत्वञ्च कार्य्यकारणभावस्य तज्जातीयतया नियतत्वेन व्यक्तिभेदस्य चक्रकानन्तर्भूतत्वात्। व्याघातेऽप्येकस्यैव जनकत्वाजनकत्वे तथा न च काल-भेदादिर्व्विशेषो घटते घटतत्प्रध्वंसादौ काल-भेदेऽपि तादात्म्यव्याघातोपगमादेव सत्प्रति-पक्षजात्योश्च कोविशेषो व्याघाते येन पूर्व्वत्र बाध्यबाधकयोर्द्वयोरप्याभासत्वमुत्तरत्र तूत्त-रस्य परं तथोपेयत इति गुरवः। यद्यपि हि प्रतिपक्षहेतुः साध्यान्तरसाधक इत्यस्ति तस्य जात्युत्तरवैधर्म्यं तथापि स्वहेतुरसाधकः सम-बलप्रतिपक्षप्रतिहतत्वादित्यस्य दूषणत्वार्थ-मवश्यापेक्षस्य द्वारात्मव्याघातकत्वात् साक्षा-द्वावश्योपस्थाप्यस्य द्वारेण वा स्वव्याघातकता-यामुपयुक्तविशेषाभावात्। न च तत्रास्तामेव व्याघातः सत्प्रतिपक्षता तु निरवद्यैवेति शक्य-मस्तु यतः शब्दादेर्नित्यत्वमेकस्मादनित्यत्व-ञ्चापरस्मादनुमानात्तथा सति किं न स्यात् तयोर्व्विरोधग्राहिणः प्रमाणस्य बलादिति चेन्न यथा नित्यत्वमनित्यत्वमित्युभयमास्तामित्याच-

ग्राहे तथा विरुद्धत्वमविरुद्धत्वञ्चास्तामित्यपि ब्रुवतोऽस्मान् कथं वारयिष्यसि। स्यादप्येवं यदि सत्प्रतिपक्षत्वमेव तव दोषो न स्यादिति चेत् तर्हि मन्तव्यं प्रथमस्य हेतोः समानबलप्रतिपक्षहेतुप्रतिहतत्वादसाधकत्वमित्युक्तमावर्त्तते अनवस्थायाञ्च यस्यां यस्यां सत्तायामपरापरा सत्तापाद्या तस्यास्तस्याः प्रमाणेन सिद्धौ नानवस्थादोषः स्यात् असिद्धौ चाश्रयासिद्धविषयमापादनमिति। यदि चात्माश्रयादिषु सर्व्वत्र विशेषोऽयमभिधीयते प्रमाणसिद्धत्वात् तत्र तत्र तथोपेयत इति तर्ह्यापादनस्थाने तथाभ्युपगमाय प्रमाणं नास्तीत्युक्तं भवति तथा च तत्र प्रमाणप्रश्नस्यावसरो न प्रसङ्गस्येति। अपरेऽपि विषयभेदात् तर्कभेदा आत्माश्रयादिवत् मन्तुमुचिताः तद्यथा अविनिगमः उत्सर्गः कल्पनागौरवलाघवे चानौचित्यञ्चेति। विकल्पेनान्वययोरेकस्मिन्नभ्युपगते तदेकदेशान्वयनियमसिद्धौ रणाय क्यत्वमविनिगमः सत्प्रतिपक्षहेत्वोरिव निर्द्धारयितुमशक्यान्वययोः परस्परप्रतिक्षेप एव पर्य्यवसा

नात् नन्वन्यतरमादायापि प्रकृतस्योपपत्तिसम्भवेनाविनिगमस्य दोषत्वमेव अनुपपन्नं केवलं पुंसः तत्र यदि संशयः स्यात् स च किं न स्यादिति चेन्न भावानवबोधात् प्रमाणासम्भवेन क्वचिदपि विशेषः कथमभ्युपगन्तुं शक्यो यमादाय वस्तुगत्याप्येकस्यान्वयः स्यात्। नन्वेवं प्रमाणाभाव एव दोषः स्यान्नाविनिगम इति चेन्न तस्याविनिगमोन्नेयत्वेनाविनिगमस्यैव प्रथमोपनतस्योपन्यासौचित्यात्। नन्वेवमनुमानेऽपि व्यक्त्यविनिगमो दोषः स्यादिति चेन्न अनेकव्यक्तीनामभ्युपगमनिह्नुभावात् सामान्योपसंहारस्यैकामेव व्यक्तिमाच्छेत्तुं सामर्थ्यात् अविनिगमस्य चानेकाभ्युपगमे सत्युपस्थानादिति बाहुल्यदृष्टमपेक्ष्याबाहुल्यदृष्टतया दुर्बलस्याभ्युपगमनानर्हतोत्सर्गः तद्यथा स्वस्य जाग्रतो ज्ञानं प्रति प्रामाण्याप्रामाण्यनिर्द्धारकप्रमाणानुपनिपाताविशेषेऽपि विना बाधकमप्रामाण्यमभ्युपगच्छन्तं प्रति स्यात् न तु प्रामाण्यं यं तर्कमेवालम्ब्याहुः। "तस्माद्बोधा-

त्मकत्वेन प्राप्ता बुद्धेः प्रमाणता। अर्थान्यथा-त्वहेतूत्थदोषज्ञानादपोद्यत,, इति।

एष्टव्योदाहरणञ्चैतदीश्वराभिसन्धौ वेद-प्रामाण्ये तथा यथा सौगतोऽपि न विप्रतिपत्तु-मर्हति। ननु बलवदेककोटिकः संशय एवो-त्सर्गः तत् कथं तर्कः स्यादिति चेन्न उत्सर्गस्य सम्भावनायाः स्वार्थस्थित्यनुकूलतयावलम्ब्य-त्वात् संशयस्य त्वनेवम्भावात् उत्सर्गस्यैककोटि-निविष्टत्वात् संशयस्य च कोटिद्वयावगाहित-त्वात् एतेन संशयस्यैका बलवती या कोटिः सैवोत्सर्ग इति निरस्तम्। निर्णयोऽपि संशय-स्यैवं वस्तुनियतकारणत्वरूपबलशालिनी कोटिः स्यात्। स्यादप्येवं यद्युत्सर्गवन्निर्णयेऽपि संशयानुस्मृतिः स्यादिति चेन्न उत्सर्गोदाहरणे उत्सर्गमाद्रियमाणैः संशयोच्छेदानुमतेरेव बाधाभावं सहकारिणमपेक्ष्योत्सर्गेणार्थैकभाव एव प्रमाणीभवनात्। तस्मात् यथानवस्थादयो-बाधाद्दूषणत्वं त्यजन्तस्तदभावे दूषणानि भ-वन्ति तथोत्सर्गोऽपि तथैवेति सुगमासुगमयो-रसुगमदुर्बलत्वं कल्पनागौरवं दृष्टजातीय-

मर्शस्याद्दृष्टजातीयं दुःखेन प्रतीयते अल्पम-
पेक्ष्य च वह्नित्याद्यखिलज्ञानानुभवसिद्धमेतत्
दर्शितञ्चेदं विविच्य ईश्वराभिसन्धौ यथा
नैयायिकादिकं प्रति क्षित्यादिषु प्रतिकार्य्या-
कर्तॄणां भिन्नानामभ्युपगमापादके यथा च
सौगतं प्रति प्रत्येकं कारणानां समर्थानाम-
नेकसमानदेशकालानेक नीलादिव्यक्त्युत्पादकं
वेति दूषणानुकूलमिदं तद्व्यतिरेकेण कल्पना
लाघवं साधनानुकूलं प्रामाणिकाव्यवहार्य्यत्व-
मसमाधेयजातीयमनौचित्यं वैजात्यनामकं
तस्य भेदाः प्रश्नवैजात्यादयः । प्रश्नविषयमप्र-
मिण्वतां प्रष्टरि प्रश्नानौचित्यं प्रश्नवैजात्यं यथा
अवस्तुनि विधिनिषेधयोः किमिच्छसीति पृ-
च्छतीति प्रमाणव्यवहारिणं सौगते अतएवा-
स्यानौचित्यापरनामकं वैजात्यं परस्य दोषं म-
नसि कृत्यैके ब्रुवते अत्र सचेतसां मूकतैवोचि-
तेति । अपरे च न ह्यप्रतीते देवदत्ते स किं
गौरः कृष्णो वेति वैजात्यं विना प्रश्नः स्यादिति ।
यदि चेदमनौचित्यं नाम दोषोनाभ्युपेयते
तदानीमर्थान्तरस्यार्थान्तरेण परिहारात् तत्

परस्परामालम्बितुकामः न केनाप्या दोषेणा-र्थान्तरपरिहाराभासत्ववादिन्यर्थान्तरेणैव तत् परिहरणमनुचितमित्यतोन्येन जीयेत अर्था-न्तरनिग्रहतायां विप्रतिपन्नोऽपि प्रश्नपरम्परा-मालम्ब्य स्वभङ्गभयात् कथावसानमनिच्छन्तं कथं जयेत् न चानवस्थयेति वाच्यं यावदुत्तर-मर्थान्तरेण परिहरणे प्रश्नान्तरेण वा द्वयो-रप्यनवस्थासाम्यात्। "दोषं व्यक्तिविवेके स्वं कविलोके विलोचने। काव्यमीमांसिषु प्राप्त महिमा महिमादृत,,।

ननु कथमत्र प्रामाणिकाव्यवहार्यत्वमिति दृष्टेन यदि मूकत्वमालम्ब्य तथात्वं वादिना न व्युत्पाद्यते तदानीमप्रतिभा। अथ तथात्वं व्युत्-पाद्यते प्रश्नार्थादेः प्रमाणाविषयत्वमुपन्यस्य तदात्यन्तासद्व्यवहार्यता स्वीकृतैव स्यादिति चेदत्र ब्रूवते मूकतैवात्र विजयायेति न चा-प्रतिभैवं प्रसज्यते उत्तरस्याप्रतिपत्तिरुत्तरा-र्हस्येति तल्लक्षणविशेषणात् यदि चायं नियमो वादिनेष्यते यदा भ्रान्त्यैव तेन व्यवहर्त्तव्य-मनुवादादन्यत्रेति तदा मध्यस्थोक्ताव्यत्वमस्य

दोषस्योपेयतां मध्यस्थेन अपभ्रंशभाषयापि यथा वादिप्रबोधनं क्रियते तथा यद्यप्रामाण्य-मात्रस्यापि क्रियेत तदा को दोषस्तस्य स्यात् तत्र विषये तथैव तेन वादिबोधनस्य शक्यत्वात् तस्मान्मध्यस्थं प्रत्युत्तरदानं स्वदोषपरिहा-राय प्रतिवादिनापि वैजात्यलक्षणप्रदर्शनं कार्य्यं मध्यस्थं प्रति तस्याप्रमाणेनापि बोधने निर्दोषत्वात्। ननु वादिभ्यामेव वादिनि मध्य-स्थेन वा तं प्रति वादिना वात्यन्तासद्विषयव्यव-हारोपगमे कथं नासत्ख्यातिः स्वीकृता स्यात् किं न स्यात् विशिष्टरूपे सम्बन्धांशे वा सत्-ख्यातेरन्यथाख्यातिवादिभिरभ्युपगमात्। ननु बन्ध्यासुताच्छशविषाणं भिन्नमित्यादिषु व्यव-हारतः कथं विशेष्ये विशेषणेऽपि च नासत्-ख्यातिरभ्युपगन्तव्येति चेन्न असत्ख्यात्यनभ्युप-गमस्य सत्ख्यातित्वात्यागनियमविश्रान्तत्वात् असदपि सदुपश्लिष्टमेव प्रतिभासते न तु केवल-मसत्कयापि ख्यात्या समुल्लिख्यत इत्यन्यथा-ख्यातिवादिभिरिष्यमाणत्वात् बन्ध्यासुताच्छश-विषाणं भिन्नमिति प्रतिपत्तावपि हि भिन्न

मभिधित्सिताः ततो न प्रबन्धेन निरस्यन्ते "विषदृष्टोऽपि सर्व्वज्ञो स्वयं छेत्तुमसाम्प्रतमिति,,।

ये च परैस्तर्कदोषाः षट् स्वीक्रियन्ते आश्रयासिद्धिरनुकूलत्वं मूलशैथिल्यमिष्टापादनं विपर्य्ययापर्य्यवसानं मिथोविरोधश्चेति सोऽयं तर्कस्य दोषविभागेनोपपद्यते व्याप्तिपक्षधर्म्मत्वयोः प्रतीतिमपेक्ष्य यथानुमानं जायते तथैव तर्कोऽपि इयान परमनयोर्विशेषो यदनुमानं तयोः प्रमित्या जायते तर्कस्तवास्तवाभ्यामपि ताभ्यां पराभ्युपगममात्रसिद्धाभ्यां भवति तेन विकल्प्यमाणस्तर्कः पराभ्युपगममात्रप्रसादसिद्धपरिकरो नाश्रयासिद्धमपि यावत् वास्तवीमनुरोद्धुमधिकरोति ततः प्रमित्यभ्युपगमनसिद्धिकृतवैचित्र्याश्रयात् भेदादन्यो यावान् यथा च हेत्वाभासविभागस्तद्वदेव तर्काभासविभागोऽपि न्याय्यः। तस्मादाश्रयासिद्धिमूलशैथिल्येष्टापादनान्यसिद्धिरेवैव दोषोऽनुमानवत् तत्राप्रमितत्वात्तत्स्विनी इह त्वनभ्युपगमात्तत्स्विनीति विशेषः। मिथो विरोधश्च सत्प्रतिपक्षतैव विपर्य्ययापर्य्यवसानन्तु दोषएका-

पादनस्य न भवति यन्नाम विपर्य्ययापर्य्यव-सानादापादनमेवात्मसाधनानुकूलं न भवति तदन्यदेव किमपि वाच्यं विरुद्धव्यभिचारा-स्वनुमानवत्तर्केऽपि दोषाः पृथग्वाच्याः। बाध उत्सर्गसम्भावनादेरन्यत्वानुकूलस्तर्कस्य सप्तम-मपि दोषं तर्कस्यापत्तिसाम्यं नोपगच्छामः। स चोभाभ्यामभ्युपगतव्याप्येऽनभ्युपगतव्यापके प्रा-गेव दर्शित इत्यास्तां विस्तर इति।

एवम्प्रकाराणि तत्तल्लक्षणेषु खण्डनान्यूह-नीयानि।

तदेतासु खण्डनयुक्तिषु कामपि स्थाना-न्तरस्थां केनापि प्रकारान्तरेणानीय तत्स-दृशीमन्यां वा स्वयमूहित्वा परैर्व्विविच्यमाना-न्यपि पदार्थान्तराणि बुद्धिमता बाधनीयानि। अत्र चास्माभिर्दूषयितुं शङ्कितेभ्यः परपक्ष-प्रकारेभ्यो यदि प्रकारान्तरं कोऽपि स्वयमू-हति उक्तानां बाधकानां मध्ये क्वचित् स्वप्र-ज्ञया समादध्यात् तत्र च खण्डनवादिनः प्रस्तुता प्रतिक्रिया न स्फुरेत्तदा परेण प्रयुज्य-

माने वाक्ये बहुपदात्मके कस्यचित् पदस्यार्थं खण्डयितुं खण्डनान्तरमवतारणीयम् एवं तत्रापि परेण प्रश्नाशोषणे पुनस्तथैव शाखान्तरदेषु संक्रमणीयमिति खण्डनमये चक्रे सम्यगवधेयम्। न च शाखान्तरसंक्रान्तावर्थान्तरं पतेत् अप्रकृतत्वाभावात्। न चैकनिर्णयारम्भेऽन्य संक्रान्तावनौचिती स्यात् शब्दोऽनित्यः कृतकत्वादित्यादौ परेणोक्ते कृतकत्वादौ अप्रतिपत्तव्यत्वापत्तेरन्यतरासिद्ध्याद्युच्छेदापातात्। येन हि तन्निर्वाह्यते तदनिर्वचनीयतयापि निर्वाह्यानिर्वचनीयतैवेति तस्मात्।

"तत्तुल्यो हस्तदीयञ्च योजनम् विषयान्तरे।
उद्धृत्य तस्य शोषे च निधा भ्रमति मत्क्रियेति॥"

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया प्राज्ञम्मन्यमना हठेन पठितीनाऽस्मिन् खलः खेलतु। श्रद्धाराध्यगुरुः श्लथीकृतदृढग्रन्थिः समासादयत्वेतत्तर्करसोर्म्मिमज्जनसुखेष्वासञ्जनं सज्जनः॥ ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात् यः साक्षात् कुरुते

समाधिषु परब्रह्म प्रमोदार्णवम्। यत्काव्यं मधुवर्षिधर्षितपरास्तर्केषु यस्योक्तयः श्रीहर्षस्य कवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥

इति श्रीहर्षकृतानिर्व्वचनीयसर्व्वस्वे खण्डनखण्डखाद्ये तुरीयः सङ्कीर्णपरिच्छेदः समाप्तम्।



कलिकाता

निमतलाघाट ष्ट्रीट ८ संख्यक भवने संवाद-ज्ञानरत्नाकरयन्त्रे श्रीभुवनचन्द्रवसाक-द्वारा मुद्रित।

सन १२८४ साल।

